
नारद
पुष्करतीर्थप्रवाह
ऋषी
ब्रह्म·गाय
ब्रह्मपुत्र
अग्निकुंड

भोजितेविप्रेकोटिसंभोजनंफलम् ॥ २९ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येप्रथमोऽध्यायः ॥१॥
॥ ऋषिरुवाच ॥ ॥ यदेतद्भवताप्रोक्तंसर्वंकोटिगुणंभवेत् ॥ संप्राप्यपद्मकंयोगंपुष्करेसर्वमानवैः ॥ १ ॥
स्वरूपंतस्ययोगस्ययथावन्नःप्रकीर्तय ॥ कस्मिन्कालेमहाभागसयोगःपद्मकोभवेत् ॥ २ ॥ सूतउवाच ॥
विशाखायांयदाभानुःकृत्तिकायांचचंद्रमाः ॥ तदास्यात्पद्मकोयोगःपुष्करेसचदुर्लभः ॥ ३ ॥ यदास्या
त्कृत्तिकोपेताकार्तिकीद्विजसत्तमाः ॥ नाविशाखासुभानुःस्यात्सामहाकार्तिकीस्मृता ॥ ४ ॥ तस्याम
पिनरःस्नात्वाश्रद्धयाज्येष्ठपुष्करे ॥ द्वादशाब्दफलंकृत्स्नंलभतेनात्रसंशयः ॥५॥ द्विजाऊचुः ॥ अंतरिक्षे
स्थितंकस्मात्पुष्करंसूतनंदन ॥ तदस्माकंसमाचक्ष्वकथंप्राप्यंचतन्नरैः ॥ ६ ॥ ॥ सूतउवाच ॥ ॥
अत्रैवकीर्तयिष्यामिरहस्यंपरमंद्विजाः ॥ यथामयाश्रुतंपूर्वंकथ्यमानंमहर्षिभिः ॥ ७ ॥ स्नानंकृत्वापु
रामर्त्यापुष्करेद्विजसत्तमाः ॥ अपिपापसमायुक्तागच्छंतित्रिदशालयं ॥ ८ ॥ एतस्मिन्नंतरेसर्वेअग्नि
ष्टोमादिकामखाः ॥ नाशंगताःक्रियाःसर्वास्तथान्योपिचशोभनाः ॥ ९ ॥ नकश्चिद्यच्छतेदानंनव्रतंयज
नंतथा ॥ दैवंवापैतृकंवापिनचकर्मजपादिकम् ॥ १० ॥ केवलंपुष्करेस्नानंकृत्वायांतिदिवंनराः ॥
व्यापिताःसकलालोकास्तेस्थानंभावितासुरा ॥ ११ ॥ ततःसुरगणाःसर्वेआखंडलपुरोगमाः ॥ पुरोह

रिहरौकृत्वासंप्राप्ताब्रह्मणोंतिके ॥ १२ ॥ प्र
जगतःप्रपितामहम् ॥ १३ ॥ ॥ देवाऊचु
भावेननरैर्व्याप्तंत्रिविष्टपम् ॥ १४ ॥ स्प
दानंप्रयच्छति ॥ १५ ॥ येनास्माकंभ
तथा ॥ १६ ॥ तृप्तिर्यज्ञांशसंभूतापित
॥ १७ ॥ ॥ ब्रह्मोवाच ॥ ॥ विषवृक्षो
म्नितीर्थमहंसुराः ॥ १८ ॥ मुक्त्वापंचदिनंदे
मयाकिल ॥ १९ ॥ शेषकालेंतरिक्षस्यमेत
ष्यति ॥ २० ॥ तदासर्वाणितीर्थानिपुष्करे
॥ २१ ॥ ॥ ऋषिरुवाच ॥ ॥ केमंत्रास्तेभ
शोहितं ॥ २२ ॥ ॥ सूतउवाच ॥ ॥ अ
तिब्रह्मक्षत्रविशांहितम् ॥ २३ ॥ अष्टाक्ष

र्वावावेधैःसूक्तैःस्तुत्वावेदसमुद्भवैः ॥ ब्रह्मलोकंस्थितंदेवं
॥ ॥ यदेतत्पुष्करंतीर्थंत्वयादेवविनिर्मितं ॥ तस्यतीर्थप्र
मानैःसुरान्सर्वानापिपापरतैःसदा ॥ नकश्चिद्यजतेमर्त्योनच
वेत्तृप्तिःपितॄणांचचतुर्मुख ॥ तस्मात्कुरुमहाभागदेवांस्तेयजते
तॄणांचयथासुरा ॥ तीर्थस्यास्यप्रणाशेननिःफलत्वेनवाप्रभो ॥
पसंरोप्यकथंसंछिद्यतेस्वयम् ॥ तस्मादेतद्विधास्यामिव्यो
वास्तत्रस्थास्यतिभूतले ॥ कार्तिकस्यचशुक्लांतेतत्रस्पृष्ट
स्थास्यतिपुष्करम् ॥ मंत्रैराव्हानितंमर्त्यैःस्नानार्थंचागमि
स्युर्नसंशयः ॥ श्रुत्वातेब्रह्मणोवाक्यंजग्मुर्देवास्त्रिविष्टपं ॥
हाभागयैराहूतंधरातले ॥ अंतरिक्षात्समभ्येतिब्रह्मक्षत्रंवि
पोहिष्ठेतितिसृभिःऋग्भिर्ब्राह्मणसत्तमाः ॥ समाहूतंसमभ्ये ॥ २
गमंत्रेणब्रह्मसंज्ञेनवापुनः ॥ समभ्येतिमनुष्याणांस्नानकालें

तरिक्षतः ॥२४॥ तस्मिन्कार्तिकशुक्लांतेसामान्येनव्यवस्थितम् ॥ सर्वेषामेववर्णानांमंत्रावाह्यमपिद्विजाः
॥२५॥ एकादशींपुरस्कृत्ययावत्पंचदिनानिच॥तावत्तत्रहुतंजप्तंदत्तंचाक्षयतांव्रजेत् ॥ २६ ॥ एतस्मात्कार
णाज्जातमंतिरिक्षेचपुष्करम् ॥ धरातलेद्विजश्रेष्ठाःसत्यमेतन्मयोदितं ॥२७॥ सूतउवाच॥ ॥ तत्रसंख्यावि
हीनानितीर्थान्यायतनानिच॥ आश्रमामुनिमुख्यानांराजर्षीणांचसत्तमाः ॥२८॥ यज्ञपर्वतमात्राणितीर्था
निचपदेपदे ॥ लिंगानिचतथैवैतेयज्ञवाटाःपृथग्विधाः॥२९॥ येषांसंख्यानशक्तावैकर्तुंवर्षशतैरपि॥ अपिस
वैर्द्विजैर्दैवैर्बृहस्पतिपुरःसरैः ॥३०॥ तत्रास्थितास्वयंतावत्पंचस्त्रोतासरस्वती ॥जंतोःपापविनाशायब्रह्म
लोकात्समागताः॥३१॥कनकासुप्रभाचंद्रानंदाप्राचीसरस्वती॥ पुष्करेसंस्थिताविप्राःपंचस्त्रोतासरस्वती
॥३२॥सुप्रभाज्येष्ठकुंडस्थाचंद्रामध्येचपुष्करे॥कनिष्ठेकनकानामनंदाप्राचीहगोचरे॥३३॥ तथाविष्णुपदी
गंगातत्रास्तिशुभकारिणी ॥ यज्ञपर्वतशृंगाणिक्षालयंतिपदेपदे ॥ ३४ ॥ मत्स्यकच्छपसंपूर्णाप्रविष्टा
ज्येष्ठपुष्करे ॥ यस्यास्तुदर्शनादेवनरःपापात्प्रमुच्यते ॥ ३५ ॥ श्राद्धदातातथास्नाताआजन्ममरणांति
कात् ॥ नरःप्रमुच्यतेपापाद्ब्रह्महापिनसंशयः ॥ ३६ ॥ नागतीर्थमितिख्यातंयज्ञपर्वतरोधसि ॥ त-
त्रस्नातोनरोनेतिसर्पजंसमुद्भवम् ॥ ३७ ॥ सर्वतीर्थसमोपेतंजंतुपातकनाशनम् ॥ चक्रतीर्थमिति

ख्यातंतथान्यत्तीर्थंब्रह्मणो ॥ ३८ ॥ यत्रचक्रंपुरामुक्तंविष्णुनाप्रभविष्णुना ॥ यत्रपिंडप्रदानेनसंप्राप्ते
वैष्णवेदिने ॥ ३९ ॥ पितरस्तुष्टिमायांतिप्रयांतिपरमांगतिम् ॥ तथान्यद्गमानवंतीर्थंतत्रख्यातंसुपुण्य
दम् ॥ ४० ॥ यत्रस्नातोनरःसम्यक्नाभ्यांयोनिंप्रगच्छति ॥ गयाकूपमितिख्यातंतथान्यत्पितृवल्लभ
म् ॥ ४१ ॥ कार्तिक्यांसयमभ्येतिगयायत्रद्विजोत्तमाः ॥ कपिलाख्यातत्रवापीपुण्यास्तिद्विजसत्तमाः
॥ ४२ ॥ यस्यांशुक्लचतुर्दश्यांस्नातःकुष्टैःप्रमुच्यते ॥ तथाकुंडत्रयंपुण्यंज्येष्ठमध्यकनिष्ठिकम् ॥
॥ ४३ ॥ ब्रह्मणानिर्मितंतत्रसर्वपातकनाशनम् ॥ तथान्यःसुप्रभाकूपोवामदेवेननिर्मितः ॥ ४४ ॥ य
त्रवैस्नानमात्रेणसर्वपापंप्रणश्यति ॥ यमुनाख्यानदीयत्रस्वयमेवसमागता ॥ ४५ ॥ गंगायाःस्पर्द्ध
यापुण्यासर्वपातकनाशिनी ॥ रूपतीर्थमितिख्यातंतथातत्रास्तिसुंदरम् ॥ ४६ ॥ यत्रस्नातानराःस
र्वेविरूपाश्वसुरूपिणः ॥ रुद्रकुंडमितिख्यातंतथातत्रास्तिसुंदरम् ॥ ४७ ॥ यांतिस्नातानराःपुण्यंल
भंतेसुसमाहिताः ॥ तथागस्त्याश्रमःपुण्योयज्ञपर्वतरोधसि ॥ ४८ ॥ तत्रास्तिपुण्यंसुमहद्यत्रस्नाता
स्त्रिविष्टपम् ॥ ४९ ॥ मृकंडस्यमुनेस्तीर्थंतत्रास्तिशुभद्धिदम् ॥ यस्मिन्फलप्रदानेनसाफल्यंजा
यतेसदा ॥ ५० ॥ पुलस्त्येनकृतंतीर्थंतत्रास्तिद्विजसत्तमाः ॥ पूर्णमास्यांचतुर्दश्यांस्नातःपुष्कर-

मेवच ॥ ५१ ॥ तथांविष्णुपदंनामतत्रतीर्थमनुत्तमम् ॥ यस्यसंस्पर्शनादेवनरोमुक्तिमवाप्नुयात् ॥
॥ ५२ ॥ दधीचेराश्रमस्तत्रतथान्यत्पापनाशनम् ॥ प्राचीसरस्वतीतीरेसर्वलोकेषुविश्रुता ॥ ५३ ॥
तथामंकणकस्यापितत्रान्यत्पापनाशनम् ॥ आश्रमोस्तिमहादेवोयत्रनित्यंव्यवस्थितः ॥ ५४ ॥ तथा
मार्कंडविप्रर्षेस्तत्राश्रमपदंमहत् ॥ संतिष्ठतेद्विजश्रेष्ठसर्वकामप्रदंनृणाम् ॥ ५५ ॥ प्रेततीर्थंतथैवा-
न्यस्तत्रास्तिद्विजसत्तमाः ॥ यत्रस्नातानगच्छंतिप्रेतत्वंमानवाःक्वचित् ॥ ५६ ॥ सप्तर्षीणांतथैवान्य
आश्रमोस्तिशुभावहः ॥ कन्यासांतेसमासाद्यसंसारोनैवजायते ॥ ५७ ॥ पुनरन्यस्यराजर्षेःकुंडम-
स्तितथापरम् ॥ सर्वपापहरंस्नानादेवतीक्ष्णकरःसदा ॥ ५८ ॥ तथान्यापुत्रदातत्रकीर्तिदाबहुपुत्रदा
॥ तस्यापिस्नानमात्रेणनारीगर्भवतीभवेत् ॥ ५९ ॥ दशाश्वमेधकंनामतथान्यत्तीर्थमुत्तमम् ॥ तत्रा-
स्तियस्यसंपर्कादश्वमेधफलंलभेत् ॥ ६० ॥ यज्ञपर्वतइत्युक्तःसर्वतीर्थमयःशुभः ॥ तत्रास्तिदर्शनद्य-
स्यसर्वपापंप्रणश्यति ॥ ६१ ॥ अत्रश्लोकापुरागीताविष्णुनाप्रभविष्णुना ॥ ६२ ॥ यदायज्ञपदेत-
त्रबध्वादानवपुंगवम् ॥ अद्यप्रभृतियश्चैनंपर्वतंयज्ञसंज्ञितम् ॥ ६३ ॥ प्रणमस्यातियोभक्त्याजानुभ्यां
धरणींगतः ॥ समहत्पदमाप्नोतिफलंप्राप्यदशाब्दकम् ॥ ६४ ॥ गच्छंतःपुष्करेमर्त्यायादिविघ्नैर्नयुंज्य-

ते ॥ मार्गेचपर्वतंदृष्ट्वानत्वातत्फलमाप्नुयात् ॥ ६५ ॥ अद्यप्रभृतितत्रैवकरिष्यंतिसमाश्रमम् ॥ ल-
क्षमेकंतुतीर्थानांजंतुःपातकनाशनम् ॥ ६६ ॥ निर्झराणित्रयाण्यत्रह्रदावारस्तथैवच ॥ तीर्थत्वंम-
मपादस्यप्रभावाद्यास्यतिक्षितौ ॥ ६७ ॥ एषकृतयुगेनंतस्त्रेतायांलक्षयोजनम् ॥ द्वापरेदशसाहस्रं
लोकानांयज्ञपर्वतः ॥ ६८ ॥ ह्रस्वतांयास्यतिततःकलिकालेसमंशनैः ॥ वृक्षोदकसमोपेतोएषअत्रस-
दामम ॥ ६९ ॥ ॥ सूतउवाच ॥ ॥ एवमुक्त्वाजगन्नाथस्तथापर्वतरोधसि ॥ लक्षतीर्थमयंतीर्थमेकं-
चक्रेस्वयंततः ॥ ७० ॥ प्रोवाचचततोहृष्टोमंदगंभीरयागिरा ॥ एतत्कृतंमयातीर्थंनाम्नातेनैवविश्रुतम्
॥ ७१ ॥ प्रयास्यतिधरापृष्ठेसर्वपातकनाशनम् ॥ एकादश्यानरोयत्रभक्त्यास्नानंकरिष्यति ॥ लक्ष-
तीर्थसमुत्थंहितत्कृतंफलमाप्स्यति ॥ ७२ ॥ ॥ सूतउवाच ॥ ॥ एतानिमुख्यतीर्थानिमयाप्रोक्तानि-
वोद्विज ॥ नशक्यानिचकात्स्न्र्येनवक्तुंवर्षशतैरपि ॥ ७३ ॥ यथाचवर्षताधारायथाचदिवितारकाः ॥
सिकतारेणवोयद्वत्संख्ययापरिवर्जिताः ॥ ७४ ॥ तद्वच्चपुष्करारण्येतीर्थान्यायतनानिच ॥ यज्ञोपवी-
तमात्राणिभवंतिचपदेपदे ॥ ७५ ॥ तस्मात्विवेकिनातत्रश्लेष्ममूत्रादिकाक्रिया ॥ नकार्यापुष्करार-
ण्येयोजनाभ्यंतरेसदा ॥ ७६ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येद्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥

॥ ऋषिरुवाच ॥ ॥ यदेतद्भवताप्रोक्तंज्येष्ठमध्यकनिष्टकं॥कुंडानांत्रितयंचैवतत्रयज्ञमभूत्कथम् ॥ १ ॥
॥ सूतउवाच ॥ ब्रह्मलोकेनिवसतोब्रह्मणोव्यक्तजन्मनः॥ पुराचंतासमुत्पन्नाकथंयज्ञंकरोम्यहम्॥ २ ॥
सर्वेचमृत्युलोकेस्मिन्देशेमध्यतमयतः॥ तन्नाम्नामामकंक्षेत्रंतथान्येषांदिवौकसाम् ॥ ३ ॥ अष्टषष्टिप्रमा
णानिशिवक्षेत्राणितत्रवै ॥ विष्णोश्चापिमहेंद्रस्यतथान्येषांदिवौकसाम् ॥ ४ ॥ तस्मादात्मीयपद्मेव
कार्यस्थानंधरातले ॥ यज्ञवाटोमहान्यत्रभविष्यतिसुविस्तरः ॥ ५ ॥ एवंसमुचितध्यात्वाहस्तात्कम
लमुत्तमम् ॥ प्राक्षिपद्धरणीतल्पेस्वस्तिस्वस्तितमब्रुवन् ॥ ६ ॥ ततस्तत्पतितंयत्रपुरापद्मंद्वितीय
म् ॥ स्थानंगतंतृतीयंचवेगेनात्पत्यवारिजः ॥ ७ ॥ तेषुतोयंविनिष्क्रांतंसर्वेष्वपिविनिर्मलम् ॥
तत्रब्रह्मासमागत्यतत्पुण्यंसमकल्पयत् ॥ ८ ॥ तस्यतच्चांतरेप्राप्तेतत्रदशेचतुमुखः ॥ पञ्चप्रमाणिकांभू
मिंयथार्थंसमकल्पयत् ॥ ९ ॥ अब्रवीच्चततोहृष्टस्त्रैलोक्यंनंदयन्विधिः ॥ एतन्मत्पुष्करंसृष्टंयावन्मा
त्रधरातले ॥ १० ॥ पुष्करंनामविख्यातंत्रैलोक्येतद्भविष्यति ॥ क्रमात्संयास्यतिख्यातिंज्येष्ठमध्य
कनिष्टकम् ॥ ११ ॥ एतत्कुंडत्रयालोकेख्यातिंयास्यतिसांप्रतम् ॥ १२ ॥ पापनाशायलोकानां
ममवाक्यान्नसंशयः ॥ एवमुक्त्वाचतुर्वक्रःस्थापयामासतत्तदा ॥ १३ ॥ यज्ञस्थानकृतांभूमिंसमंता

योजनात्मकाम् ॥ उत्तरेणेंद्रमार्गायथावत्प्राचीसरस्वती ॥ १४ ॥ नंदायाश्चापिपूर्वेणयावत्कन्या
स्यपुष्करे ॥ योजनाभ्यंतरेतावत्पुण्यंपुष्करसंज्ञकम् ॥१५॥ ख्यातोयंसर्वजंतूनांधर्मःस्वर्गप्रमुक्तिदः ॥
अपिकीटपतंगायेपशवःपक्षिणोमृगाः ॥ योजनाभ्यंतरेचैवमृतायांतिपरांगतिम् ॥ १६ ॥इतिश्रीपद्मपु
राणेपुष्करमाहात्म्येतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ ऋषिरुवाच ॥ यस्तत्रविहितोयज्ञोब्रह्मणालोककर्तृणा ॥ ऋत्विजःकेसदस्याःकेतत्रयाताबदस्वनः॥१॥
कीदृग्रूपःसयज्ञोभूत्किंवृत्तांतंचसूतज ॥ सर्वंविस्तरतोब्रूहिपरंकौतूहलंहिनः ॥ २ ॥ येयजंतिसुराःस
र्वेमुनयश्चतथापरे ॥ तेनदत्तकृतोभोगःपरंकौतूहलंहिनः ॥ ३ ॥ ॥ सूतउवाच ॥ यज्ञकामंचतुर्वक्त्रंज्ञा
त्वादेवःशतक्रतुः ॥ सर्वैःसुरगणैःसार्द्धमध्वरेसमुपागताः ॥ ४ ॥ तथाचभगवान्शंभुःसर्वैरात्मगणैःसह
तान्दृष्ट्वाभ्यागतान्ब्रह्मामर्त्यंधर्मसमाश्रितः ॥ ५ ॥ प्रोवाचविनयोपेतःकृतांजलिपुटस्थितः ॥ स्वागतं
वःसुरश्रेष्ठाःप्रसादंक्रियतांमम ॥ ६ ॥ विश्राम्यतांयथान्यायंस्थानेषुरुचिरेषुच ॥ मंत्राहूतागमिष्यंतय
त्रसर्वेषुगच्छतः ॥ ७ ॥ ॥ देवाऊचुः ॥ नैतदर्हंवचोवक्तुंभवतःपद्मसंभव॥त्वमेवसर्वदेवानांपूज्यस्तुत्यश्च
नापरः ॥ ८ ॥ प्रसादात्तवयज्ञांशंलभामोत्रवयंफलम् ॥ विस्मयोजायतेस्माकंकृतांजलिपुटेत्वयि ॥ ९ ॥

॥ ब्रह्मोवाच ॥ ॥ मर्त्यानांविहितायज्ञाःकर्त्तुंभोक्तुंदिवौकसाम् ॥ तस्मात्मर्त्यंविजानीध्वंयावद्यज्ञंचभू
तले ॥ १० ॥ मर्त्यभावंसमासाद्यकरिष्याम्यध्वरंसुराः ॥ भवद्भिर्देवतारूपैर्भागोग्राह्योयथानृणाम् ॥११॥
होमकालेचसंप्राप्तेमंत्राहूतागमिष्यत ॥ शेषकालेप्रकर्तव्यंसाहाय्यंयज्ञकर्मणि ॥ १२ ॥ मानुषत्वंसमा
स्थायभृत्यंवात्रदिवानिशम् ॥ सुश्रूषाब्राह्मणेंद्राणांस्नानभोजनपूर्वकम् ॥१३॥ ॥ देवाऊचुः ॥ येनये
नात्रकर्तव्यंसाहाय्यंतवपद्मज ॥ साहाय्यतस्यतद्ब्रूहिक्रियतेयेनयेनतत् ॥ १४ ॥ अव्यग्रेणात्मनः
कृत्यंतवश्रेयोभिवृद्धये ॥ शैथिल्यमन्यथाभावीकृत्येचाहुतिवेदिते ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ ॥ त्वया
वित्तपतेवित्तंवस्त्राणिविविधानिच ॥ देयानियाचितेनैवकालेतदर्पियाचितम् ॥ १६ ॥ विश्वकर्मन्द्रुतं
वापियज्ञवाटंनिरूपय ॥ मंडपंसर्वदेवानामाश्रमाश्चमनोहराः ॥ १७ ॥ वासुदेवत्वयासर्वंकृत्याकृत्यंम
खेमम ॥ वक्तव्यमुपविष्टेनभृत्यानांशूलिनासह ॥ १८ ॥ त्वयाशंभोगणाःसर्वेकार्यायज्ञस्यसर्वतः ॥ भू
तयक्षपिशाचानांरक्षार्थंवैधृतायुधाः ॥ १९ ॥ त्वयाबृहस्पतेविप्राःपरिक्ष्यायज्ञकर्मणि ॥ व्रतायचयथा
र्हास्युर्जैतच्चान्यस्ययुज्यते ॥ २० ॥ त्रैलोक्येपितदावायोभ्रामित्वान्हामखेमम ॥ आमंत्र्यास्तेद्विजादे
वानागगंधर्वगुह्यकाः ॥ २१ ॥ त्वयाशक्रसुरैःसार्द्धंशुश्रूषात्रद्विजन्मनाम् ॥ कार्यात्स्नानादिकाकृत्स्ना

पादशौचांतिकासदा ॥ २२ ॥ मयामौनव्रतंग्राह्यंसावित्र्यासहसांप्रतम् ॥ युष्मदाधायकृत्यानितस्मा
त्स्थेयंसमाहितैः ॥ २३ ॥ सर्वैःसुरैःस्वकृत्येषुयथाच्छिद्रंनजायते ॥ होमेवाद्विजभोज्येवाकृत्येधन्येषु
सर्वतः ॥ २४ ॥ यत्किंचिज्जायतेयोत्रतत्सर्वंचविशेषतः ॥ तस्मैदेयंप्रमाणंततममवाक्यंसुरेश्वराः ॥
॥ २५ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येयज्ञनिरूपणोनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ एतास्मिन्नंतरेप्राप्तोविश्वकर्मापितामहम् ॥ प्रोवाचविनयोपेतःसंसिद्धोयज्ञमंडपः ॥
॥ १ ॥ कुंडादियज्ञवेदिश्चपत्नीशालासदःसभा ॥ प्रभोत्रयदतःकृत्यंसमादिशचवापरम् ॥ २ ॥ एत
स्मिन्नंतरेवाक्यंसमेत्यगुरुरब्रवीत् ॥ ऋत्विजोदेवसंप्राप्तायथार्हावेदपारगाः ॥ ३ ॥ एतान्वरयभद्रंतेका
लोयंयाज्ञिकस्थितः ॥ ॥ ऋषयऊचुः ॥ ॥ एकतोब्राह्मणाश्रेष्ठावृतायेगुरुणास्वयम् ॥ यदर्थेकेनकस्त
त्रक्तःसर्वेब्रवीहिनः ॥ ४ ॥ ॥ सूतउवाच ॥ ॥ तत्रहोताभृगुस्तेनवृतोबव्हृचसत्तमः ॥ अच्छावको
मरीचिस्तुग्रावःसुगतिकोमुनिः ॥ ५ ॥ पुलस्त्यश्चतथाध्वर्युःप्रतिष्ठातात्रिसंज्ञकः ॥ तत्ररैभ्योमुनिश्रेष्ठ
स्तथोन्नेतासनातनः ॥ ६ ॥ ब्रह्माचनारदोगर्गोब्राह्मणश्छंदएवच ॥ आग्नीध्रश्चभरद्वाजोहोतापाराशर
स्तथा ॥ ७ ॥ उद्गातागौतमःसाक्षात्प्रस्तोतागोभिलोमुनिः ॥ शांडिल्यःप्रतिहर्ताचसुब्रह्मण्यस्तथा

गिराः ॥ ८ ॥ तस्ययज्ञस्यकृत्यर्थंमित्येतेषोडशर्त्विजः ॥ वस्त्राभरणशोभाढ्यावित्तपेनकृताश्चते
॥ ९ ॥ ततःकृत्वास्वयंब्रह्मासर्वेषामर्हणक्रियाम् ॥ वेदोक्तेनविधानेनप्रोवाचाविनयान्वितः ॥ १० ॥
॥ ब्रह्मोवाच ॥ ॥ एषोहंशरणंप्राप्तोयुष्माकंद्विजसत्तमाः॥अनुगृण्हीतवैसर्वेदीक्षायैमखकर्माणि॥११॥
अग्निष्टोमंकरिष्यामियज्ञसंचयनंशुभम् ॥ सचमेसिद्धिमायातुसर्वविघ्नाविवर्जितः ॥ १२ ॥ बाढमित्येवच
प्रोक्तंततस्तैःसकलैर्द्विजैः ॥ १३ ॥ मुहूर्तेशोभनेप्राप्तेयज्ञयानसमुद्भवे ॥ वंशपात्रंवृतंसोमंपुलस्त्योध्व
र्युसत्तमः ॥ १४ ॥ मंत्रवंतंन्यसेन्मूर्ध्निब्रह्मणोव्यक्तजन्मनः ॥ वाद्यमानेषुवाद्येषुसिद्धकिन्नरगुह्यकैः
॥ १५ ॥ गंधर्वैर्गीतसंसक्तैर्वेदोच्चारपरैर्द्विजैः ॥ अरणीसमुपादायपुलस्त्योवाक्यमब्रवीत् ॥ १६ ॥ प
त्नीपत्नीतिविप्रेंद्राःप्रोच्चैस्तत्रव्यवस्थिताः ॥ एतस्मिन्नंतरेब्रह्मानारदंमुनिसत्तमम् ॥ १७ ॥ नारदंप्रे
षयामासपत्नीमानीयतामिति ॥ सोपिमंदंसमागत्यसावित्रींप्राहलीलया ॥ १८ ॥ युद्धप्रियोंतरंवाक्यं
सावित्र्यासहब्रह्मणः ॥ अहंसंप्रेषितःपित्रातवपार्श्वेसुरेश्वरी ॥ १९ ॥ आगच्छप्रस्थितस्तेनसांप्रतं
यज्ञमंडपे ॥ परमेकाकिनीतत्रगच्छमानासुरेश्वरी ॥ २० ॥ कीदृग्रूपामखेतस्मिन्दृश्यासित्वमनाथव
त् ॥ तस्मादानीयिताःसर्वायाःकाश्चिद्देवयोषिताः ॥ २१ ॥ याभिःपरिवृतादेवीशोभसेत्वंमखेस्थिता ॥

एवमुक्त्वामुनिश्रेष्ठोनाग्दोमुनिसत्तमः ॥ २२ ॥ अब्रवीत्पितरंगत्वाततश्चाकारितामया ॥ परंतस्याः
स्थिरोभावःकिंचित्संलक्षितोमया ॥ २३ ॥ तस्यतद्वचनंश्रुत्वाततोमन्युसमन्वितः ॥ पुलस्त्यंप्रेषया
माससावित्र्याःसन्निधौततः ॥ २४ ॥ गच्छवत्ससमानीहित्वमेनांशिथिलात्मिकाम् ॥ सोमभारपरिश्रां
तपरमेमूर्ध्निसंस्थिता ॥ २५ ॥ एषकालात्ययोभावियज्ञकर्मणिसांप्रतम् ॥ यज्ञपानमुहूर्तोयंसावशेषव्य
वस्थितः ॥ २६ ॥ तस्यतद्वचनंश्रुत्वापुलस्त्यःसत्वरंययौ ॥ सावित्रीतिष्ठतेयत्रगृहकर्मसमाकुला ॥
॥ २७ ॥ ततःप्रोवाचकिंदेवित्वंतिष्ठसिनिराकुला ॥ यज्ञयोतोधिकःकालःसावशेषस्तुतिष्ठति ॥ २८ ॥
तस्मादागच्छगच्छामःसचकृच्छ्रेणतिष्ठति ॥ सोमभारार्दितोधातासर्वदेवसमावृतः ॥ २९ ॥ ॥ सावि
त्र्युवाच ॥ ॥ सर्वदेववृतस्तातततवत्सव्यवस्थितः ॥ एकाकिनीकथंतत्रगच्छाम्यहमनाथवत् ॥ ३० ॥
तद्ब्रूहिपितरंगत्वामुहूर्तंपरिपाल्यताम् ॥ यावदभ्येतिशक्राणिगौरीलक्ष्मीतथापरा ॥ ३१ ॥ देवपत्नीस
मायुक्तातामिरेष्याम्यहंद्रुतम् ॥ सर्वासांप्रेषितोवायुर्निमंत्रणकृतेमया ॥ ३२ ॥ आगमिष्यंतिताःशीघ्रमेवं
वाच्यःपितात्वया ॥ ॥ सूतउवाच ॥ ॥ सोपिगत्वाद्रुतंप्राहसोमभारार्दितंविधिम् ॥ ३३ ॥ नचाभ्ये
तिजगन्नाथप्रसक्तागृहकर्मणि ॥ मयोक्ताप्राहदेवानांपत्नीभिःसहितामखे ॥ ३४ ॥ अहंयास्यामितासांच ॥ ७ ॥

निष्कामासापिदृश्यते ॥ एवंज्ञात्वासुरश्रेष्ठकुरुयत्तेप्ररोचते ॥ ३५ ॥ अतिक्रमतिकालोयंयज्ञपानसमुद्भवः
॥ तिष्ठतीयंगृहव्यग्रासावित्रीशिथिलात्मिका ॥ ३६ ॥ शक्रंप्रोवाचलोकेशःपुरतोवनतास्थितम् ॥ गच्छ
शक्रसमानीहिकन्यांकांचित्वरान्वितः ॥ ३७ ॥ यावन्नक्रमतेकालोयज्ञपानसमुद्भवः ॥ तिष्ठतीयंगृहव्य
ग्रासावित्रीशिथिलात्मिका ॥ ३८ ॥ अन्ययापत्न्ययायज्ञोमयाकार्योयमेवतु ॥ पितामहवचःश्रुत्वाशक्रः
शीघ्रतरंगतः ॥ ३९ ॥ गत्वाचावेषयामासतदर्थंकन्यकांद्विजाः ॥ अथतक्रघटंन्यस्तमस्तकासाचवीक्षि
ता ॥ ४० ॥ कन्यकागोपजातन्वीचंद्रास्यापद्मलोचना ॥ सर्वलक्षणसंपूर्णायौवनारंभमाश्रिता ॥ ४१ ॥
साशक्रेणाथसंदृष्टाकात्वंकमललोचना ॥ कुमारीवासनाथावासुताकस्यब्रवीहिमे ॥ ४२ ॥ ॥ कन्यो
वाच ॥ ॥ गोपकन्यास्मिभद्रंतेतक्रंविक्रेतुमागता ॥ यदिगृण्हासिमेमूल्यंतक्रार्थंदेहिमाचिरं ॥ ४३ ॥
तच्छ्रुत्वाददृशेंद्रस्तामक्षतागोपकन्यकाम् ॥ जगृहेत्वरयायुक्तस्तक्रंप्रोत्सृज्यभूतले ॥ ४४ ॥ अथतांरुद
तींशक्रःसमादायत्वरान्वितः ॥ गोवक्रेणप्रवेश्याथगुह्येनाकर्षयत्ततः ॥ ४५ ॥ ततश्चहर्षसंयुक्तःप्रोवाचच
तुराननम् ॥ द्रुतंगत्वापुरोधृत्वासर्वदेवसमागमे ॥ ४६ ॥ कन्यकेयंसुरश्रेष्ठसमानीताशुभामया ॥ तवार्थे
चसुरूपांगीसर्वलक्षणलक्षिता ॥ ४७ ॥ गोपकन्यांविदत्वेमांगोवक्त्रेणप्रवेश्यच ॥ आकर्षिताथगुह्येन

पावनार्थंचतुर्मुख ॥ ४८ ॥ ॥ वासुदेवउवाच ॥ ॥ ब्राह्मणानांगवानांचकुलमेकंद्विधाकृतम् ॥ धेनू
दराद्विनिष्क्रांताततोजाताद्विजन्मना ॥ ४९ ॥ अस्याःपरिगृहंदेवत्वंकुरुष्वमखाप्तये ॥ यावन्नचलतेका
लोयज्ञपानसमुद्भवः ॥ ५० ॥ ॥ रुद्रउवाच ॥ ॥ प्रविष्टागोमुखेयस्मादपानेनविनिर्गता ॥ गायत्री
नामतेपत्नीतस्मादेषाभविष्यति ॥ ५१ ॥ वदंतुब्राह्मणाःसर्वेगोपकन्याथसायदि ॥ संभूताब्राह्मणीश्रेष्ठा
मद्गृहार्हापतिव्रता ॥ ५२ ॥ ॥ ब्राह्मणाऊचुः ॥ ॥ एषास्याद्ब्राह्मणीश्रेष्ठागोपजातिविवर्जिताः ॥ अ
स्मद्वाक्याच्चतुर्वक्त्रकुरुपाणिग्रहंद्रुतम् ॥ ५३ ॥ ॥ सूतउवाच ॥ ॥ ततःपाणिग्रहंचक्रेतस्यादेवापिता
महः ॥ बिभ्रत्सोमंतथामूर्ध्निगृह्योक्तविधिनाद्विजाः ॥ ५४ ॥ तत्रपाणिग्रहाद्देवीसंतिष्ठतिसुपावनी ॥ आ
द्यालोकेचविख्याताधर्मसौभाग्यदायिनी ॥ ५५ ॥ यस्तस्यांकुरुतेमर्त्यःकन्यादानंसमाहितः ॥ सकृ
त्स्नफलमाप्नोतिराजसूयाश्वमेधयोः ॥ ५६ ॥ कन्याहस्तगृहंतत्रप्राप्नोतिपतिनासह ॥ सास्यास्तुयुव
तीसाध्वीरूपसौभाग्यसंयुता ॥ ५७ ॥ पिंडदानंनरस्तस्यांयःकरोतिद्विजोत्तमाः ॥ पितरस्तस्यतुष्यंति
तर्पिताःपितृतीर्थवत् ॥ ५८ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येगायत्रीविवाहोनामपंचमोऽध्यायः ॥५॥
॥ सूतउवाच ॥ ॥ एवंपत्नींसमासाद्यगायत्रींचतुराननः ॥ संप्रहृष्टमनाभूत्वाप्रविष्टोयज्ञमंडपम् ॥

॥ १ ॥ गायत्र्यापिसमादायमूर्ध्निताअरयःशुभाः ॥ प्रतस्थेसंपरित्यज्यगोपभावंविगर्हितम् ॥ २ ॥
वाद्यमानेषुवाद्येषुब्रह्मघोषोदिवंगतः ॥ कलंप्रगायमानेषुगंधर्वेषुसमंततः ॥ ३ ॥ सर्वदेवद्विजोपेतःसंप्रा
प्तेयज्ञमंडपे ॥ गायत्र्यासहितोब्रह्मामानुषंभवमाश्रितः ॥ ४ ॥ एतस्मिन्नंतरेचक्रेकेशनिर्वापणंविधिः
॥ विश्वकर्माशिखानांचगायत्र्यास्तदनंतरम् ॥ ५ ॥ उदुंबरंततोदंडंपुलस्त्योपिसमाददे ॥ एण
शृंगान्वितंचर्ममंत्रवंतंद्विजोत्तमाः ॥ ६ ॥ पत्नीशालागृहेधृत्वागायत्रींमौनधारिणीम् ॥ मेखलांनिदधेचा
स्याःकट्यांमौंजीमयींशुभाम् ॥ ७ ॥ ततश्चक्रेपरंकर्मयदुक्तंयज्ञसंभवम् ॥ ऋत्विग्भिःसहितोहोतादेववा
क्यसमाश्रिताः ॥ ८ ॥ संपादितेथविप्रेंद्रैःकृतेकर्मचतुष्टये ॥ प्रवर्ग्येक्रियमाणेथतत्राश्चर्यमभून्महत् ॥ ९ ॥
जाल्मरूपधरःकश्चिद्दिग्वासाविकृताननः ॥ कपालपाणिरायातोभोजनंदीयतामिति ॥ १० ॥ वार्यमा
णोपिविप्रेंद्रैःप्रविष्टोयाज्ञिकंतदा ॥ प्रकृत्वाटमटान्यायंभर्त्स्यमानोपिसर्वतः ॥ ११ ॥ ॥ सदस्याऊचुः ॥
कस्मात्प्राप्यभिमानस्त्वंप्रविष्टोयज्ञमंडपे ॥ कपालीनग्नरूपश्चयज्ञकर्मविलंबकः ॥ १२ ॥ तस्माद्गच्छद्रु
तंमूढयावद्ब्रह्मानकुप्यति ॥ तथान्येब्राह्मणाःश्रेष्ठास्तथादेवाःसवासवाः ॥ १३ ॥ ॥ जाल्मउवाच ॥ ॥
ब्रह्मयज्ञमिमंश्रुत्वासदूरादहमागतः ॥ बुभुक्षितोद्विजश्रेष्ठास्तत्किमर्थंविगर्हथ ॥ १४ ॥ दीनांधकृपणैः

सर्वैस्तर्पितःक्रतुरुच्यते ॥ अन्यथाराष्ट्रनाशायस्यादुक्तंब्राह्मणैर्यतः ॥ १५ ॥ अन्नहीनोदहेद्राष्ट्रंमंत्रहीन
स्तथाद्विजान् ॥ याजकंदक्षिणाहीनोनास्तियज्ञसमोरिपुः ॥ १६ ॥ ॥ ब्राह्मणाऊचुः ॥ ॥ यदित्वं
भोक्तुकामोत्रसमायातोव्रजद्रुतम् ॥ एतस्यांसत्रशालायांयत्रभुंजंतितापसाः ॥ १७ ॥ दीनांधकृपणाश्चा
न्येनक्तंदिनमवारिताः ॥ अथवाधनकामस्त्वंवस्त्रकामोथतापसः ॥ १८ ॥ व्रजधर्मपतिर्यत्रदानशालांस
माश्रितः ॥ अनर्होथमहामूर्खयज्ञःपैतामहोयतः ॥ १९ ॥ अर्थिभिःसर्वतोपश्यतत्किंनिंदसिदुर्मते ॥
एवमुक्तःकपालंतत्परिक्षिप्यधरातले ॥ २० ॥ जगामादर्शनंसद्योद्दीपवाद्विजसत्तमाः ॥ ॥ ऋत्विजऊ
चुः ॥ ॥ कथंयज्ञक्रियाकार्याकपालेसदसिस्थिते ॥ परिक्षिपाथतस्मात्त्वंएतद्विजवरोत्तमः ॥ २१ ॥
अथैकोबहुधाप्रोक्तःसदस्यैस्तैर्द्विजोत्तमैः ॥ दंडकाष्ठंसमुद्यम्यचिक्षेपतत्सदोबहिः ॥ २२ ॥ अथान्यत्तत्रसं
जातंकपालंतादृशंपुनः ॥ तस्मिन्नपिपरिक्षिप्तेतथान्यत्समपद्यत ॥ २३ ॥ एवंशतसहस्राणिप्रयुतान्यर्बु
दानिच ॥ तत्रजातानियैर्व्याप्तोयज्ञवाटःसमंततः ॥ २४ ॥ हाहाकारस्ततोयज्ञेसमस्तेयज्ञमंडपे ॥ दृ
ष्ट्वाकपालसंघांस्तान्यज्ञकर्मप्रदूषकान् ॥ २५ ॥ अथतंचिंतयामासध्यानंकृत्वापितामहः ॥ हरंचाष्टत
माज्ञायतत्सर्वंहृष्टरूपधृक् ॥ २६ ॥ कृतांजलिपुटोभूत्वाततःप्रोवाचसादरम् ॥ किमेवंदेवयज्ञेस्मिन्क

र्मणाक्रियतेक्षातिः ॥ २७ ॥ तस्मात्संहरसर्वाणिकपालानिसुरेश्वर ॥ यज्ञकर्मविलंबोयंमाभूत्त्वयिसमीप
गे ॥ २८ ॥ ततःप्रोवाचसंक्रुद्धोभगवान्शशिशेखरः ॥ यन्मेमध्यतमंपात्रंभोजनायचसंस्थितम् ॥ २९ ॥
एतेद्विजाधमाःकस्मात्तद्विषंतिपितामह ॥ तथामांचसमुद्दिश्यजुहुयाज्जातवेदसम् ॥ तथान्यादेवतातद्व
न्मंत्रपूतंहविर्बुधैः ॥ ३० ॥ तस्माद्यदिविधिःकार्यःसमाप्तोयज्ञकर्मणि ॥ तत्कपालासृतंवन्हौहोतव्यंसक
लंहविः ॥ ३१ ॥ तथामांचसमुद्दिश्यविशेषाज्जातवेदसि ॥ होतव्यंनान्यथैवैषसमाप्तिंयातुसुक्रतुः ॥
॥ ३२ ॥ ॥ पितामहउवाच ॥ ॥ रूपाणितवदेवेशपृथग्भूतान्यनेकशः ॥ संख्ययापरिहीना
निध्येयानिसकलानिच ॥ ३३ ॥ एतन्महाव्रतंरूपंतवद्वैतात्रिलोचनम् ॥ द्वैतंचमखकर्मस्यात्तत्रैवतव
युज्यते ॥ ३४ ॥ एषामुपरियाज्ञीयंहविःपश्चाच्चकर्मयत् ॥ गर्हितंसर्वलोकानांश्रुतिस्मृतिविगर्हितम्
॥ ३५ ॥ तववाक्यमपित्र्यक्षनान्यथाकर्तुमुत्सहे ॥ मृन्मयेषुकपालेषुहविश्चाथसुरेश्वर ॥ ३६ ॥
अद्यप्रभृतियज्ञेषुपुरोडाशादिकंद्विजैः ॥ तवोद्देशेनदेवेशहोतव्यंशतरुद्रियम् ॥ ३७ ॥ विशेषात्सर्व
यज्ञेषुजाप्यंचैवविशेषतः ॥ तंकृत्वाटमटान्यायंयःप्रविष्टोरुपदःसदाः ॥ ३८ ॥ तस्मात्प्रयास्यतिख्या
तिंपुष्करेटमटेश्वरः ॥ एवमुक्त्वाचतुर्वक्त्रःस्थापयामासतत्क्षणात् ॥ ३९ ॥ लिंगंमाहेश्वरंतत्रसंज्ञयाट

मटेश्वरम् ॥ अब्रवीच्चततोवाक्यंयश्चैतत्पूजयिष्यति ॥ ४० ॥ ज्येष्ठकुंडेनरस्नात्वाययास्यतिपरांगति
म् ॥ शुक्लपक्षेचतुर्दश्यांकार्तिक्यांजागरंपरम् ॥ ४१ ॥ यःकरिष्यतिचाप्यस्यलिंगस्यसुसमाहितः ॥
ब्रह्महत्यादिकात्पापादपिमुक्तिमवाप्स्यति ॥ ४२ ॥ एवमुक्तेनविधिनाप्रहृष्टस्त्रिपुरांतकः ॥ संजहारकपा
लानिततःसर्वाणितत्क्षणात् ॥ ४३ ॥ ब्राह्मणास्तेसुव्रताश्चप्रवृत्तायज्ञकर्मणि ॥ ४४ ॥ इतिश्रीपद्मपुरा
णेपुष्करमाहात्म्येअटमटेश्वरोत्पत्तिवर्णनोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ छ ॥
॥ ॥ सूतउवाच ॥ ॥ एवंचयजतस्तस्यचतुर्वक्रस्यपुष्करे ॥ सर्वेषांकोटिरायातादक्षिणापथवासिनाम्
॥ १ ॥ श्रुत्वापैतामहंयज्ञंकौतुकेनसमन्विताः ॥ कीदृशःसतुयज्ञोत्रदीक्षितोयत्रपद्मजः ॥ २ ॥ शंकुकर्णा
महाकर्णावक्रनासास्तथापरे ॥ लंबोदराबृहद्दंतादीर्घोष्ठास्थूलमस्तकाः ॥ ३ ॥ चिपिटाक्षास्तथाचान्ये
दीर्घग्रीवास्तथापरे ॥ कृष्णांगाःस्फुटितैःपादैःप्राप्तास्तेपुष्करंप्रति ॥ ४ ॥ दृष्ट्वार्ताःश्रमसंयुक्ताःसंप्राप्य
सुमहत्सरः ॥ स्वच्छोदकसमाकीर्णंपद्मिनीखंडमंडितम् ॥ ५ ॥ प्रविष्टाःसत्वरंतत्रस्नानार्थंमुनिसत्तमाः ॥
ततोयावद्विनिष्क्रांताःप्रपश्यंतिपरस्परम् ॥ ६ ॥ तावद्वैरूपनिर्मुक्ताःसंजातःकामसन्निभाः ॥ ततोवि ॥१०॥
स्मयमाविष्टामिथःप्रोचुःप्रहर्षिताः ॥ ७ ॥ रूपमात्मनआलोक्यज्ञात्वातीर्थंतदुत्तमम् ॥ अत्रस्नानादि

दंरूपमस्माभिःप्राप्तमुत्तमम् ॥ ८ ॥ अस्मात्तस्मादिदंतीर्थंरूपतीर्थंभविष्यति ॥ त्रैलोक्येसकलेख्यातं
सर्वंपातकनाशनम् ॥ ९ ॥ यत्रस्नानंकरिष्यंतिश्रद्धयापरयायुताः ॥ जलेनापिगयाश्राद्धेतेलप्स्यंत्यधि
कंफलम् ॥ १० ॥ अत्रस्नात्वाचदानंचकरिष्यतिहिमानवाः ॥ भविष्यतिनसंदेहोराजानस्तेभवेभवे ॥
॥ ११ ॥ स्थास्यामोवयमत्रैवसांप्रतंकृतसंश्रयाः ॥ नयास्यामोपरंतीर्थंयद्यपिस्यात्सुदुर्लभम् ॥ १२ ॥
एवमुक्त्वाथब्रुभुजःसांप्रतंकृतसंश्रयाः ॥ तत्सरोभयतश्चैतेपरंनियममास्थिताः ॥ १३ ॥ यज्ञोपवीतिना
त्रातीतानितीर्थानिचक्रिरे ॥ ॥ सूतउवाच ॥ अद्यापिचाद्विजश्रेष्ठास्तत्तीर्थेपादमात्रमम् ॥ प्रथमंस्पृ
श्यतेतोयंनिंद्यंस्यादपिततशुभम् ॥ १४ ॥ निष्कामस्तुपुनर्मर्त्योयःस्नानंतत्रश्रद्धया ॥ कुरुतेसपरंश्रेयः
प्राप्नुयात्सिद्धिलक्षणम् ॥ १५ ॥ एवंतेमुनयःसर्वेविभज्यतुमहत्सरः ॥ सायंतनंतुतत्रैवकृत्वाकर्मसुवि
स्तरम् ॥ १६ ॥ ततोनिशामुखेप्राप्तायत्रदेवपितामहः ॥ उपविष्टाःपरिश्रांतादेवायाज्ञीयकर्मणी ॥
॥ १७ ॥ इंद्रादिकैःसुरैर्भक्त्यावंद्यमानांघ्रयःस्थिताः ॥ अभिवाद्याथतान्सर्वानुपविष्टास्तदाग्रतः ॥
॥ १८ ॥ चक्रुश्चाथकथाश्चित्रायज्ञकर्मसमुद्भवाः ॥ सोमपानविधानंवैव्यत्ययेचसमुद्भवम् ॥ १९ ॥
प्रोचुस्तत्रसमाश्रित्यतथान्येदूषयंतिहि ॥ अन्येमिमांसकास्तत्रक्रोधसंरक्तलोचनाः ॥ २० ॥ परेस्प

ष्टविदश्चान्येमध्यस्थाद्विजसत्तमाः ॥ प्रोचुर्वादंपरित्यज्यस्वाभिप्रायंयथोदितम् ॥ २१ ॥ महावीरपु
रोडाशंचयनंप्राशनादिकम् ॥ विवादाश्चक्रिरेचान्येस्वंचपक्षंसमाश्रिताः ॥ २२ ॥ एवंसारजनीतेषामति
क्रांताद्विजन्मनाम् ॥ यज्ञवादप्रसक्तानांसंस्पर्धानांपरस्परम् ॥ २३ ॥ इतिश्रीपद्मपुराणेपुष्करमा
हात्म्येतीर्थोत्पत्तिवर्णनंनामसप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ छ ॥
॥ ॥ सूतउवाच ॥ ॥ ततःप्रभातेविमलेप्रोद्गतेरविमंडले ॥ प्रातःस्नानंसमासाद्यब्राह्मणाज्येष्ठपुष्करे
॥ १ ॥ प्रोचुःपितामहंसर्वेयत्रप्राचीसरस्वती ॥ त्रयस्त्रिंशच्चकोव्यस्तुसान्निध्यंयत्रसंस्थितम् ॥ २ ॥
द्वादश्यांचविशेषेणनराणांपुण्यवासिनाम् ॥ तत्रकृत्वाद्यमध्यान्हंकरिष्यामस्ततःक्रियाम् ॥ ३ ॥ याज्ञि
कींविबुधश्रेष्ठतदनुज्ञातुमर्हसी ॥ शीघ्रंचैवागमिष्यामकृत्यंनिर्वर्त्यपैतृकम् ॥ ४ ॥ ततस्तेब्रह्मणाप्रोक्ताः
संज्ञयागम्यतामिति ॥ शीघ्रमागमनंकार्यंयथाकर्मप्रवर्तते ॥ ५ ॥ ततस्तेसत्वरंगत्वादृष्ट्वाप्राचींसरस्वती
म् ॥ नानामुन्याश्रमोपेतामानंदंपरमंययुः ॥६॥ बदरेंगुदकाश्मर्यैस्तटद्वयविराजिताम् ॥ चिर्भटैश्चकरीरैश्च
मुनिधान्यैस्तथापरैः ॥ ७ ॥ तीर्थेस्नात्वाचसंतर्प्यपितृदेवान्समाहिता ॥ ददृशुश्चाश्रमंतत्रनातिदूरेव्यव
स्थितम् ॥ ८ ॥ क्रीडंतिनकुलाःसर्पायत्रैकस्थानमाश्रिताः ॥ पंचाननैःसमंनागावृषदंशाश्चमूदकैः ॥

॥ ९ ॥ पश्यमानास्तदाश्चर्यंयावद्गच्छंतिस्वाश्रमम् ॥ तावत्तत्रप्रपश्यंतिमुनिंमंकणकंस्थितम् ॥ १०॥
दर्भान्संमार्जमानंतुपवित्रार्थंयथोचितान् ॥ एतस्मिन्नंतरेतस्यकराच्छाकरसोऽस्रवत् ॥ ११ ॥ पाटितात
स्यदर्भेणतंदृष्ट्वासप्रहर्षितः ॥ ननर्तोत्थायवेगेनसंप्राप्तानपितान्मुनीन् ॥ १२ ॥ अनालाप्योद्यतानर्हान्
तीर्थायगृहमागतान् ॥ नृत्यमानेनतेनाथजगत्सर्वंचराचरम् ॥ १३ ॥ ननर्तशंकरंमुक्त्वाब्रह्माणंचजना
र्दनम् ॥ तेपिसर्वेमुनिश्रेष्ठाननृतुस्तत्प्रभावतः ॥ १४ ॥ विडंबनंचतेमत्वापलायनपराद्विजा ॥ प्रविष्टा
मंडपेतत्रयाज्ञिकेनाव्यतत्पराः ॥ १५ ॥ ननृतुस्तेपितान्दृष्ट्वासर्वेयेतत्रसंस्थिताः ॥ देवायज्ञामनुष्या
श्चमुक्त्वाब्रह्महरीश्वरान् ॥ १६ ॥ ॥ ब्रह्मोवाच ॥ ॥ किमेतद्ब्राह्मणश्रेष्ठान्नृत्यंतिदेवतायुतैः ॥ सर्वै
रपियुगांतेतुकौतुकात्तत्रभद्रवत् ॥ १७ ॥ ॥ ब्राह्मणाऊचुः ॥ ॥ नवयंदेवनृत्यामःस्ववशानैवदेव
ताः ॥ आनंदंशृणुवक्ष्यामःसर्वंनृत्यस्यकारणम् ॥ १८ ॥ ऋषिमंकणकोनामप्राचीतीरंसमाश्रितः ॥
तस्यशाकरसोजातःकरेदर्भेविपाटिते ॥ १९ ॥ तत्प्रभावाज्जगत्सर्वंप्रनृत्यातिचराचरम् ॥ तस्माद्वारय
भद्रंतेस्वयंगत्वाचतंमुनिम् ॥ २० ॥ यावन्नगिरिशृंगाणिनपतंतिधरातले ॥ नत्यजंतिचमर्यादांनिजां
चमकरालयाः ॥ २१ ॥ नपतंतिमहावृक्षाःस्थलान्नप्रद्रवंतिच ॥ तच्छ्रुत्वापद्मजःप्राहसमीपस्थंमहेश्व

रम् ॥ २२ ॥ धूर्जटेत्वंमुनिंगत्वाशीघ्रंनृत्यात्‌निवारय ॥ ततोब्राह्मणरूपेणतंगत्वाप्राहशंकरः ॥ २३ ॥
भोभोतापसकिंनृत्यंत्वंकरोषिविगर्हितम् ॥ तपःक्षयकरंतस्मात्परित्यज्यसुदूरतः ॥ २४ ॥ ब्राह्मणोयो
त्रलास्येनतेनकृत्वासजीवती ॥ निरयंयात्यऽसंदेहब्रह्मकर्मविगर्हितः ॥ २५ ॥ ॥ मंकणकउवाच ॥
किंनपश्यसिविप्रेंद्रकराच्छाकरसोद्भवः ॥ तपसोहिप्रभावेननिष्क्रांतःसिद्धलक्षणः ॥ २६ ॥ नाहंरागा
न्नचोन्मादान्नृत्यर्थंद्विजोत्तम ॥ नचलोभेनतपसोनाशोयेनप्रजायते ॥ २७ ॥ योनृत्यतिमुदाविप्रो
भक्त्याचपरयायुतः ॥ तस्यावलोकनान्मुच्येद्ब्रह्मापिचनसंशयः ॥ २८ ॥ तच्छ्रुत्वाशंकरस्तूर्णंपश्य
तस्तस्यतन्मुनेः ॥ तर्ज्जन्याताडयामासस्वांगुष्ठंप्रहसन्निव ॥ २९ ॥ ततोभस्मविनिष्क्रांतंप्रभूतंहि
मपांडुरम् ॥ येनतद्भूतलंकृत्स्नंतत्क्षणात्पांडुरंकृते ॥ ३० ॥ ततःप्रोवाचतंविप्रःपश्यमेभस्मनिर्गतम्
॥ अंगुष्ठाग्रान्ननृत्यामितथाप्यहमृषीश्वर ॥ ३१ ॥ एतत्प्रमाणस्त्वंविप्रस्वल्पेशाकरसेपिच ॥ प्रनृत्य
सिविनिष्क्रांतेतन्नैतत्तवयुज्यते ॥ ३२ ॥ ॥ सूतउवाच ॥ ॥ तंदृष्ट्वामहदाश्चर्यंसमुनिर्विस्मया
न्वितः ॥ चिंतयित्वाथसुचिरंज्ञात्वातंवृषभध्वजम् ॥ ३३ ॥ ततःप्रोवाचसाष्टांगंप्रणिपत्यकृतांजलिः ॥
कृत्यंदेवत्रिनेत्रैतन्नान्यस्यास्तिजगत्त्रये ॥ शक्तिरेषाकराग्रस्यभस्माकर्षतियःप्रभुः ॥ ३४ ॥ ॥ श्री

रुद्रउवाच ॥ ॥ ज्ञातोस्म्यऽहंत्वयाविप्रनान्योमांवेत्तिकश्चन ॥ तस्माद्रागात्मकंनृत्यंतपोविघ्नकरंत्य
ज ॥ ३५ ॥ एतदर्थमहंप्राप्तोज्ञात्वात्वांनृत्यतत्परम् ॥ वरंवरयभद्रंतेनवृथादर्शनंमम ॥ ३६ ॥ ॥
मंकणउवाच ॥ ॥ एषएववरोस्माकंयत्रदृष्टोमहेश्वरः ॥ योगिभिर्ध्याननिरतैर्नदृश्यसिहिकर्हिचित् ॥
॥ ३७ ॥ स्वप्नेपितवदेवेशदर्शनंदुर्लभंनृणाम् ॥ दृष्ट्वापिचमहायज्ञैःसर्वसंपूर्णदक्षिणैः ॥ ३८ ॥ ॥
श्रीमहादेवउवाच ॥ ॥ तथापियाचमानायमत्तोमुनिवरोत्तम ॥ वरोभिवांच्छितोस्माकंदर्शनंसफलंकुरु
॥ ३९ ॥ मुनिरुवाच ॥ ॥ अवश्यंयदिदेयोमेवरोदेववरस्त्वया ॥ तदेतज्जायतांकृत्स्नंयस्त्वांवक्ष्या
म्यहंविभो ॥ ४० ॥ कार्तिक्यांशुक्लपक्षेतुकार्तिकेमासियोनरः ॥ प्राचीक्षेत्रंसमागत्यस्नात्वासंतर्पयेत्पितॄ
न् ॥ ४१ ॥ तस्यस्यात्वत्प्रसादेनसर्वपातकसंक्षयः ॥ त्वयाचसर्वदास्थेयमत्रैवसुरसत्तम ॥ ४२ ॥ तथामे
तपसोनाशोनवृथास्यात्सुरेश्वर ॥ श्रीमहादेवउवाच ॥ संप्राप्तेदिवसेविप्रद्वादशीसांज्ञिकेध्रुवम् ॥ शुक्लका
र्तिकमासस्यस्थितिर्मेत्रभविष्याति ॥ ४३ ॥ नचतेतपसोहानिर्नृत्याद्स्माद्भविष्यति ॥ येत्रस्नानंकरिष्यं
तिप्राच्यांमेश्रद्धयान्विताः ॥ ४४ ॥ द्वादश्यांकार्तिकेमासेशुक्लपक्षेद्विजोत्तम ॥ सप्तजन्मकृतंपापंतेषांया
स्यतिसंक्षयम् ॥ ४५ ॥ स्वल्पमात्रमपिस्वर्णंयत्रदास्यंतिमानवाः ॥ स्वर्णयज्ञस्यमेधस्यफलंप्राप्स्यंतिते

द्विज ॥ ४६ ॥ भोजनंयत्रदास्यंतिवस्त्रंश्रद्धासमन्वितम् ॥ रोमसंख्यानितेस्वर्गेविशिष्यंतियुगानिच ॥
॥ ४७ ॥ तस्मावस्त्रान्नदानंचदेयंरौप्यंचकांचनम् ॥ स्वल्पदानमपिप्राहमहाफलप्रदंद्विज ॥ ४८ ॥ करि
ष्यंतिद्विजोभक्त्यायश्चात्रशतरुद्रियम् ॥ समुक्तैःसकलैःपापैर्निर्मलःस्यात्तुतत्क्षणात् ॥ ४९ ॥ गायत्रींश
तमेकाग्र्योयोत्रस्नात्वाजपिष्यति ॥ जन्ममृत्युजरामुक्तःसशिवंप्रतियास्यति ॥५० ॥ प्राचीसरस्वतीतीरे
यःप्राणान्संत्यजिष्यति ॥ सोपिआत्मकृतात्पापात्सम्यग्मुक्तिमवाप्नुयात् ॥ ५१ ॥ अपिकीटपतंगायेपश
वःपक्षिणोमृगाः ॥ तेप्यत्रमृत्युमापन्नाःप्रयास्यंतिपरांगतिम् ॥ ५२ ॥ घर्मार्तावापिपिपासार्ताप्राचीयेसलि
लेचये ॥ स्नापयिष्यंतितेप्यस्मिन्प्रयांतिपरमांगतिम् ॥ ५३ ॥ सूतउवाच ॥ एवमुक्त्वासभगवांस्तत्रचा
दर्शनंगतः ॥ सोपिमंकणकोनृत्यंत्यक्त्वातेपेमहत्तमः ॥ ५४ ॥ तपस्तत्रतपस्तप्त्वाकिंचित्कालंसमाहि
ताः ॥ तेनैवापिशरीरेणशिवसायुज्यतांगतः ॥ ५५ ॥ वरदेशांतरस्थोपियस्तदाश्रमिणंमृडम् ॥ स्नात्वा
पश्येत्स्पृशेद्वापिसद्योमुच्येत्तदंगजात् ॥ ५६ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येप्राचीमहिमावर्णनंनामाऽ
ष्टमोऽध्यायः ॥ ८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ एवमंकणकेनृत्यात्निवृत्तेतदनंतरम् ॥ यज्ञःपैतामहोवृद्धिंजगामेष्टप्रदोनृणाम् ॥

॥ १ ॥ बव्हाश्चर्यसमोपेतोबहुदानसमन्वितः तत्रैकेनद्विजेंद्रेणवर्तमानेनयौवने ॥ बटुनायत्कृतंकर्मतच्छृ
णुध्वंद्विजोत्तमाः ॥ २ ॥ जलसर्प्पंसमादायज्येष्ठकुंडाद्धयानकम् ॥ सिचिक्षेपसदेतत्रबहूनांब्राह्मणां
तिके ॥ ३ ॥ ततःसडिंडिभस्तूर्णंभ्रममाणइतस्ततः ॥ त्रासयामासविप्रांस्तान्संसक्तांयज्ञकर्मणि ॥ ४ ॥
अथहोतारस्थितंप्रेक्ष्यदीर्घसत्रसमुद्भवे ॥ ससर्पोवेष्टयामासतस्यागात्रंसमंततः ॥ ५ ॥ नचचालस्यचस्था
नात्प्रायश्चित्तविभीषया ॥ प्रोचुस्तेसततंसत्रंभयेनन्यस्तलोचनाः ॥ ६ ॥ हाहाकारोमहान्यज्ञेएतस्मिन्नं
तरेद्विजाः ॥ तस्मात्सदासिविप्राणांविषमाहिप्रशंकया ॥ ७ ॥ तस्यपुत्रोविनीतात्मामित्रावरुणकर्मणि ॥
संस्थितस्तेनसंदृष्टःपितासर्पातिवेष्टितः ॥ ८ ॥ ज्ञात्वातच्चेष्टितंतस्यबटोःसर्पंप्रतिद्विजाः ॥ सशापक्रोधसं
युक्तस्ततस्तंपुरतस्थितम् ॥ ९ ॥ यस्मात्पापत्वयासर्पःक्षिप्तःसदासिदुर्मते ॥ तस्माद्भवद्रुतंसर्पोममवा
क्यादनंतरम् ॥ १० ॥ ॥ बटुकउवाच ॥ ॥ हास्येनजलसर्पोयंमयामुक्तोत्रलीलया ॥ नतेतातंसमु
द्दिश्यतत्किमांशपासिद्विज ॥ ११ ॥ एतस्मिन्नंतरेतस्यगात्रंमुक्त्वासपन्नगः ॥ जगामान्यत्रतस्यापिसंत्रा
सःसमपद्यत ॥ १२ ॥ सोपिसर्पत्वमापेदेसनातनसुतोबटुः ॥ दुःखशोकसमायुक्तोब्राह्मणैःपरिवारितः ॥
॥ १३ ॥ अथगत्वाभृगोःपार्श्वंबाष्पाकुलितलोचनः ॥ प्रोवाचगद्गदंवाक्यंप्राणिपातपुरःसरम् ॥ १४ ॥

सनातनसुतश्चास्मिपौत्रश्चपरमेष्टिनः ॥ शप्तस्तवसुतेनाथच्यवनेनमहात्मना ॥ १५ ॥ निर्दोषोब्राह्मण
श्रेष्ठतस्माच्छापात्प्ररक्षताम् ॥ तच्छ्रुत्वावचनंप्राहकृपाविष्टोभृगुःस्वयम् ॥ १६ ॥ अयुक्तंविहितंवत्सय
च्छप्तोयंत्वयाद्विजः ॥ नमांधर्षयितुंशक्तोविषाढ्योपिभुजंगमः ॥ १७ ॥ किंपुनर्जलसर्पोयंनिर्विषोरज्जु
सन्निभः ॥ नमामुद्दिश्यमुक्तोयंसर्पस्तेनद्विजन्मना ॥ शापमोक्षंकुरुष्वास्यतस्माच्छीघ्रंद्विजन्मनः ॥
॥ १८ ॥ ॥ च्यवनउवाच ॥ ॥ यदित्यजतिमर्यादामब्धिःशैत्यंव्रजेद्रविः ॥ उष्णत्वंचक्षपानाथतन्मे
स्यादनृतंवचः ॥ १९ ॥ तच्छ्रुत्वानिश्चयंतस्यस्वयमेवपितामहः ॥ तत्रायातःस्थितोयत्रसपौत्रःसर्परूप
धृक् ॥ २० ॥ प्रोवाचनविषादस्तेपुत्रकार्यःकथंचन ॥ यत्सर्पत्वमनुप्राप्तःशृणुयावद्वचोमम ॥ २१ ॥
पुरासंस्रष्टुकामोहेनागानांनवमंकुलम् ॥ तद्भविष्यतितेपश्चात्समर्यादंधरातले ॥ २२ ॥ मंत्रौषधियुतान्
पुंसांनपीडामाचरिष्यसि ॥ संप्राप्स्यसिपरांपूजांसमस्तेजगतीतले ॥ २३ ॥ अस्त्यत्रमुमुचंतोयं
यज्ञपर्वतरोधसि ॥ मयाचमनयोग्यंतत्स्वयमेवविनिर्गतम् ॥ २४ ॥ तत्रस्थस्यतपस्थस्यनागःकर्कोट
कोनिजाम् ॥ तवदास्यतिसत्कन्यांततःसृष्टिर्भविष्यति ॥ २५ ॥ नवमस्यकुलस्यात्रसमर्यादस्यभूतले ॥ ॥१४॥
श्रावणेकृष्णपक्षेतुसंप्राप्तेपंचमीदिने ॥ २६ ॥ संप्राप्स्यसिपरांपूजांधरण्यांतवतत्कुलम् ॥ अद्यप्रभृतित

त्कुंडंनागतीर्थमितिश्रुतं ॥ २७ ॥ ख्यातिंयास्यतिभूपृष्ठेसर्वपातकनाशनम् ॥ येत्रस्नानंकरिष्यंतिसं
प्राप्तेपंचमीदिने ॥ २८ ॥ पूजयिष्यंतियेपश्चात्तेलभिष्यंतिवांछितम् ॥ पुत्रकामाचयानारीपंचम्यां
भास्करोदये ॥ २९ ॥ करिष्यतितथास्नानंफलहस्तासुभक्तितः ॥ साप्राप्स्यतिवरंपुत्रंवंशवृद्धिकरंसम
म् ॥ ३० ॥ ॥ सूतउवाच ॥ ॥ एवंप्रवदतस्तस्यब्रह्मणोव्यक्तजन्मनः ॥ अन्येनागाःसमाया
तास्तत्रयज्ञेनिमंत्रिताः ॥ ३१ ॥ वासुकिस्तक्षकश्चैवपुंडरीकःकृशोदरः ॥ कंबलाश्वतरौनागौशेषःस्ता
र्क्षकएवच ॥ ३२ ॥ तेसर्वेप्रणिपत्योच्चैःप्रोचुर्देवंपितामहम् ॥ तवादेशाद्वयंप्राप्तायज्ञेत्रप्रपितामह ॥
॥ ३३ ॥ पातालाद्वायुनाहूताःसर्वएवनिमंत्रिताः ॥ त्वत्सहायार्थमादेशंदयितांनःपितामह ॥ येनकुर्मो
वयंशीघ्रंभृत्यत्वंतेसमाश्रिताः ॥ ३४ ॥ ॥ पितामहउवाच ॥ ॥ साहायमेतदस्माकंभवदीयंमहोर
गाः ॥ गतास्तेनवशंशीघ्रंनागराजस्यपर्वते ॥ ३५ ॥ नामतीर्थेततस्थेयंसर्वैर्यत्नसमाश्रितैः ॥ यःकस्मि
न्ममयज्ञेत्रदुष्टभावंसमाश्रितः ॥ ३६ ॥ समागच्छंतिविज्ञायभक्षणीयःसमत्वरम् ॥ राक्षसोवापिशाचो
वाभूतोवामानुषोपिवा ॥ ३७ ॥ एतद्वैकृतमन्नागाममयज्ञस्यरक्षणम् ॥ कृतेस्मिन्नथयूयंवैश्रावणेनागस
त्तमाः ॥ ३८ ॥ पंचम्यांकृष्णपक्षस्यतत्रपूजामवाप्स्यथ ॥ येर्चयंतिमहाभागावाल्मीकंभवतांनराः ॥

श्रावणेकृष्णपंचम्यांतिषुयुष्मद्भयंनहि ॥ ३९ ॥ ॥ सूतउवाच ॥ ॥ बाढमित्येवतेप्रोचुर्नमस्कृत्यपि
तामहम् ॥ सनातनसुतोपेतानागास्तीर्थंययुस्ततः ॥ ४० ॥ ततःप्रभृतितत्तीर्थंनागतीर्थमितिस्मृत
म् ॥ सर्वकामप्रदंभक्त्यानराणांस्नानकारिणाम् ॥ ४१ ॥ यस्तत्रकुरुतेस्नानंसकृच्छ्रद्धासमन्वितः ॥
तत्रयच्छतिमिष्टान्नंद्विजानांसज्जनैःसह ॥ ४२ ॥ पूजयित्वासनागेंद्रान्सनातनपुरःसरान् ॥ सप्तजन्मां
तरंयावत्तावत्स्थानमवाप्नुयात् ॥ ४३ ॥ भूतप्रेतपिशाचानांडाकिनीनांविशेषतः ॥ नच्छिद्रंनचरोगा
स्युर्व्याधिर्नचरिपोर्भयम् ॥ ४४ ॥ यश्चैतच्छृणुयाद्भक्त्यावाच्यमानंद्विजोत्तमैः ॥ सोपिसंवत्सरंयावत्प
न्नगैर्नचदंश्यते ॥ ४५ ॥ सर्पदष्टस्ययश्चैतत्पुरतःपठतेद्विजः ॥ नागतीर्थस्यमाहात्म्यंकालदष्टोपिजीव
ति ॥ ४६ ॥ पुस्तकेलिखितंयत्रगानतीर्थसमुद्भवम् ॥ माहात्म्यंतिष्ठतेयत्रसर्पस्तत्रनतिष्ठति ॥४७॥
इतिश्रीपद्मपुराणेपुष्करमाहात्म्येनागतीर्थमहिमावर्णनंनामनवमोऽध्यायः ॥ ९ ॥ ॥ छ ॥
॥ ॥ सूतउवाच ॥ ॥ एवंसदिवसोविप्राद्वितीयोमखसंभवः ॥ अतिक्रांतोद्विजेंद्राणांसक्तानांयज्ञकर्म
णि ॥ १ ॥ तृतीयेथदिनेप्राप्तेत्रयोदश्यांद्विजोत्तमाः ॥ प्रातःस्नानंसमासाद्यसर्वेतेज्येष्ठपुष्करे ॥ २ ॥
ततःप्रोचुःसमागत्यदीक्षितंप्रपितामहम् ॥ अत्रारण्येत्रयोदश्यांकिंतीर्थंबहुपुण्यदम् ॥ ३ ॥ मध्यान्ह

सेवनंयत्रवयंकुर्मःपितामह ॥ ब्राह्मणानामिदंवाक्यंश्रुत्वातानाहपद्मजः ॥ ४ ॥ ॥ ब्रह्मोवाच ॥ ॥
अत्रास्तिपश्चिमेभागेखर्जूरीवनमध्यगः ॥ संगमःसर्वपापघ्नःप्राचीनंदासरस्वती ॥ ५ ॥ यस्तत्रकार्तिकेशु
क्लत्रयोदश्यांसमाहितः ॥ स्नानमाचरतेमर्त्यःसगच्छतिपरांगतिम् ॥ ६ ॥ यस्तत्रकुरुतेश्राद्धंतस्मिन्नह
निमानवः ॥ कुलानितारयेत्सप्तसोतीतान्यात्मनासह ॥ ७ ॥ धेनुंयच्छतिविप्राययस्तुतत्रसमाहितः ॥
सर्वोपस्करसंयुक्तांनसभूयोत्रजायते ॥ ८ ॥ तत्रधेनुर्विशेषेणदातव्याद्विजसत्तमाः ॥ धेनुरूपायतोनंदान
दीत्वंसमुपागता ॥ ९ ॥ यावंतिधेनुरोमगणितावंतःपुरुषान्निजान् ॥ तारयेत्पुरुषस्तत्रभविष्यान्विगतान
पि ॥ १० ॥ ॥ सूतउवाच ॥ ॥ तच्छ्रुत्वावचनंतस्यब्रह्मणोव्यक्तजन्मनः ॥ प्रहृष्टमनसःसर्वेगता
नंदांसरस्वतीम् ॥ ११ ॥ तत्रस्नात्वापितॄन्सर्वान्संतर्प्यविधिपूर्वकान् ॥ जलशायिनमालोक्ययज्ञवाटं
पुनर्गताः ॥ १२ ॥ चक्रुश्चयज्ञकर्माणिक्रमेणतदनंतरम् ॥ वेदोक्तेनविधानेनप्रीणनायदिवौकसाम् ॥
॥ १३ ॥ वपनंश्मश्रुकेशानांनकर्तव्यंद्विजोत्तमाः ॥ पुष्करेमनुजैर्यस्मात्तत्रनित्यंविधेर्मखम् ॥ १४ ॥
विष्णुब्रह्मादिदेवानांप्रसादाश्चपदेपदे ॥ लिंगानिचद्विजश्रेष्ठाअवच्छन्नानिपुष्करे ॥ १५ ॥ योजनाभ्यं
तरेतस्माद्वपनंगूप्यरेतसी ॥ मलानिजनितान्यत्रकार्याणिचमहात्मभिः ॥ १६ ॥ ॥ इतिश्रीपद्मपुराणे

पुष्करमाहात्म्येनंदासरस्वतीस्तवोनामदशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ छ ॥ ॥
॥ ॥ ऋषयऊचुः ॥ ॥ सूतपुत्रत्वयाप्रोक्तायेयंनंदासरस्वती ॥ धेनुरूपानदीभूतातत्कथंसापुराभव
त् ॥ १ ॥ ॥ सूतउवाच ॥ ॥ एतांवःकथयिष्यामिकथांपातकनाशिनीम् ॥ श्रवणादपिविप्रेंद्र
नंदानदिसमुद्भवा ॥ २ ॥ आसीत्प्रभंजनोनामराजापरमधार्मिकः ॥ ब्रह्मण्यश्चशरण्यश्चदेवाद्विजपरायणः
॥ ३ ॥ नदुर्भिक्षंनदारिद्र्यंनव्याधिर्दुःखवेदना ॥ परःपराभवोनैवतस्मिन्शासतिमेदिनीम् ॥ ४ ॥ कदा
चिन्मृगयांगंतुंक्षात्रंधर्मंसमाश्रितः ॥ खर्जुरीवनमासाद्यपरिबभ्रामचापधृक् ॥ ५ ॥ अथदूरात्समालोक्य
मृगींबालकवत्सकाम् ॥ स्तनंशिशोःप्रयच्छंतींविश्वस्तामकुतोभयाम् ॥ ६ ॥ सातेननिहतादूरात्शरे
णानतपर्वणा ॥ आकर्णपूरितेनाशुविशिखेनोदरांतिके ॥ ७ ॥ सोपिबाणोमृगींभित्वाप्रविवेशधरातले ॥
टंकारंसुमहत्कुर्वन्वल्मीकमिवपन्नगः ॥ ८ ॥ अथात्मानंहतंमत्वारुधिराक्ताचसामृगी ॥ दिशोविलोकया
मासखर्जूरीवनसंश्रिता ॥ ९ ॥ पुरुषंचापपाणिंचतेजसासर्वतोवृतम् ॥ घातकंतंविदित्वाथप्राणैःकंठगतै
रपि ॥ १० ॥ साप्रोवाचमृगीतत्रवाणीगद्गदयागिरा ॥ ॥ मृग्युवाच ॥ ॥ किमिदंपातकंपापत्वया
कृतंकुबुद्धिना ॥ ११ ॥ याहतास्मिसुविश्वस्ताबालपुत्रामहेषुणा ॥ नाहंशोचामिचात्मानंयत्पंचत्वमुप

स्थिता ॥ १२ ॥ तंपुत्रंशोचयाम्येनंक्षीरपानंप्रजीवनम् ॥ नाद्यापितृणमश्नातिबालकोयंममोद्भवः ॥
॥ १३ ॥ तस्मादस्यापितेपापंभविष्यतिमयासह ॥ तस्मात्त्वयाकृतंह्येतदुभाभ्यांवधमेवच ॥ १४ ॥
तस्मादत्रवनेव्याघ्ररूपस्त्वंहिभविष्यसि ॥ ॥ सूतउवाच ॥ ॥ तच्छ्रुत्वातुमहाशापंसराजाव्याकु
लेंद्रियः ॥१५ ॥ प्रोवाचतांमृगींगत्वाचापंक्षिप्त्वाधरातले ॥ स्वधर्मेवर्तमानंमांदोषहीनंवनेचरी ॥ १६ ॥
कस्माच्छापासिकिंपापात्नबिभेषिकथंचन ॥ आखेटकविनोदायमृगाःसृष्टाःस्वयंभुवा ॥ १७ ॥ पशव
श्चापियज्ञार्थंश्रुतिरेषापुरातनी ॥ १८ ॥ अहंप्रभंजनोराजासूर्यवंशसमुद्भवः ॥ तस्माद्रक्षस्वपापान्मां
प्रमाणंयदितेमृगि ॥ १९ ॥ ॥ मृग्युवाच ॥ ॥ सत्यमेतत्त्वयाप्रोक्तंमृगाःसृष्टाःस्वयंभुवा ॥ क्ष
त्रियाणांवधार्थायपरितोषविधिःस्मृतः ॥ २० ॥ शयानंव्याधिनाग्रस्तंतृषार्तंजलसंश्रितम् ॥ स्तनपा
नपरंचैवमैथुनासक्तचेतसम् ॥ २१ ॥ हत्वामृगंभवेत्पापीक्षत्रियोनात्रसंशयः ॥ तस्मात्वंकाननेचात्रव्या
घ्रोरौद्रोभविष्यसि ॥२२॥ अन्यायेनहतापापयदहंक्षात्रियाधम॥ राजोवाच ॥ ॥ यद्येवंकुरुमेभूयःशाप:
स्यांतोमहामृगि ॥ अन्यायिनोपिपापस्यप्रणामस्तेकृतोमया ॥ २३ ॥ ॥ मृग्युवाच ॥ ॥ यदाप
श्यासिराजेंद्रकाननेत्रसमागताम् ॥ भ्रमंतींनंदिनींधेनुंगोरूपस्यपुरःसराम् ॥ २४ ॥ तयासहसमासाद्यसं

वादंधर्मसूचकम् ॥ संप्राप्स्यसिततोमुक्तिंव्याघ्रत्वान्नात्रसंशयः ॥ २५ ॥ ॥ सूतउवाच ॥ ॥ एव
मुक्त्वामृगीप्राणान्तत्याजसाद्विजोत्तमाः ॥ तत्क्षणात्सोपिराजेंद्रोव्याघ्रत्वंसमपद्यत ॥ २६ ॥ जघान
चमृगान्यन्यान्शबरांश्चविशेषतः ॥ तथाग्राम्यानपिपशून्दृष्टिगोचरमागतान् ॥ २७ ॥ जगामसुमह
त्कालःसंख्ययापरिवर्जितः ॥ कस्यचित्त्वथकालस्यवनेतास्मिन्समागतम् ॥ २८ ॥ गोपंगोपिजनाकीर्णं
गोकुलंगोगणाकुलं ॥ नानावर्णकसंघातैधावमानैरितस्ततः ॥ २९ ॥ शोभनंगोपगोपीनांगीतनृत्यैःसमं
ततः ॥ अथवासितमात्रेतुगोकुलेतत्रकानने ॥ ३० ॥ गोवृंदानिदिशोभेजुःसत्वरंतृणवांछया ॥ गोवृज
स्याथचैकस्यमुख्यभूतातिसुंदरी ॥ ३१ ॥ घंटालंकृतकंठाचनंदिनीनामगौर्द्विजाः ॥ अच्छिन्नतृणवां
छंतीयूथंत्यक्त्वानिजंततः ॥ ३२ ॥ परिबभ्रामवेगेनखर्जूरिवनमध्यगा ॥ एतास्मिन्नंतरेदृष्टातेनव्याघ्रेण
साद्विजाः ॥ ३३ ॥ क्षुत्क्षामेनसुरौद्रेणानिजाश्रमस्थितेनच ॥ तांदृष्ट्वासहसाप्राप्तांप्रहृष्टेनांतरात्मना ॥
॥ ३४ ॥ पर्यधावत्सवेगेनपादमुद्यमदक्षिणम् ॥ सादृष्ट्वातमनुप्राप्तंमृत्योर्वक्त्रमिवापरम् ॥ ३५ ॥ संस्मा
रगोकुलेसंस्थंवत्सकंसुतवत्सला ॥ चकारविविधान्दीनान्प्रलापान्दुःखसंयुतान् ॥ ३६ ॥ बाष्पपूर्णे
क्षणादीनानिरुत्साहाचजीविते ॥ तांदृष्ट्वादुःखसंयुक्तांदीनांविलपातिंमुहुः ॥ ३७ ॥ प्रोवाचक्रोधसंयुक्तो

व्याघ्रोरौद्रतरंवचः ॥ ॥ व्याघ्रउवाच ॥ ॥ किंवृथाक्रंदसोधेनोप्रलापैर्विविधैःकृतैः ॥ ३८ ॥ सांप्रतं
जीवितंनास्तिप्राप्तायास्तंममांतिकम् ॥ अद्यत्वांसिंकरिष्यामितवमांसैर्बुभुक्षितः ॥ ३९ ॥ पिपासांना
शयिष्यामिरुधिरेणात्मनस्तथा ॥ तस्मात्स्मरह्यभीष्टंस्वंदेवतांहृदिसंस्थिताम् ॥ ४० ॥ सुदृष्टंकुरुस
त्यंचयावन्नप्रहरामिते ॥ ॥ धेनुरुवाच ॥ ॥ नाहंमृगेंद्रशोचामिजीवितंक्षणभंगुरम् ॥ आत्मीयगो
कुलेबद्धंबालंशोचामिवत्सकम् ॥ ४१ ॥ क्षीराहारंलघुंमार्गमक्षेपंतंमुहुर्मुहुः ॥ तस्माद्यदिमहाभागममादे
शंप्रयच्छासि ॥ ४२ ॥ तद्गत्वाथव्रजंशीघ्रंपरिष्वज्यत्स्ववत्सकम् ॥ आघ्रायमूर्ध्निदत्वाचशिक्षांस्वतनयं
तथा ॥ ४३ ॥ आगच्छामिद्रुतंभूयस्तवपार्श्वेमृगाधिप ॥ ददामिभक्षणार्थंतेततोनिजकलेवरम् ॥४४॥
अनेककर्मणाव्याघ्रविहितेनभवेन्मम ॥ सुकृतार्थंनसंदेहोमरणंत्वत्प्रसादतः ॥ ४५ ॥ ॥ व्याघ्रउवाच॥
कथंतंत्वद्गृहंगत्वापुनरेवममांतिकम् ॥ मरणायय तोनास्तिलोकेप्राणसमंभयम ॥ ४६ ॥ तावद्वल्लभतांया
तिधनपत्नीसुतादिकम् ॥ यावत्प्राणभयंनस्यात्तत्प्राप्तिस्तुविषायते ॥ ४७ ॥ ॥ धेनुरुवाच ॥ ॥
सत्यमेतन्महाभागनास्तिप्राणसमंभयम् ॥ शपथैरागमिष्यामितस्मान्मुंचाविभोद्यमाम् ॥ ४८ ॥ व्याघ्र
उवाच ॥ ॥ कीदृशाःशपथाधेनोयैःकृत्वात्वंसमेष्यसि ॥ अत्रमेकौतुकंभूरितस्माच्छीघ्रंप्रकीर्तय ॥

 

॥ ४९ ॥ ॥ धेनुरुवाच ॥ ॥ यत्पापंब्रह्महत्यायांमातृपित्रोश्चबंधने ॥ तेनाहंव्याघ्रलिप्यामिनाग
च्छामिपुनर्यदि ॥ ५० ॥ अग्निदायिनोयत्पापंयत्पापंगरदायिनाम् ॥ तेनादाव्या० ॥ ५१ ॥ यस्त्रीन्ह
लेबलीवर्दान्युनक्तिक्षतधीपुमान् ॥ तेनपापेन० ॥ ५२ ॥ पूर्णमास्याममावास्यांयस्यान्मैथुनभाक्न
रः ॥ तेनपापे० ॥ ५३ ॥ श्राद्धंकृत्वापुनर्भुक्त्वामैथुनंयोधिसेवते ॥ तेनपापेन० ॥ ५४ ॥ स्वा
मिद्रोहेचयत्पापंयत्पापंवेदविक्रये ॥ तेनपापेन० ॥ ५५ ॥ विश्वासघातकानांचकृतघ्नानांचयद्भवेत् ॥
तेनपापेन० ॥ ५६ ॥ गोविक्रयेचयत्पापंयत्पापंसोमविक्रये ॥ तेनपापेन० ॥ ५७ ॥ कन्यायाविक्रये
पापंयत्पापंचौर्यकर्मणि ॥ तेनपापेन० ॥ ५८ ॥ भर्तरिजीवतियानारीव्रतोपासनतत्परा ॥ तेनपापेन०
॥ ५९ ॥ पशुपालनयुक्तास्यवैश्यस्यस्याद्धिपातकम् ॥ तेनपापेन० ॥ ६० ॥ दौर्भाग्यवन्हिदग्धा
पियापतिद्वेष्टिकामिनी ॥ तेन० ॥ ६१ ॥ संध्योपासनहीनस्ययत्पापंस्याद्विजन्मनः ॥ तस्यपा० ॥
॥ ६२ ॥ द्विजभक्तिविहीनस्ययद्वैशूद्रस्यपातकम् ॥ तेनपापेन० ॥ ६३ ॥ ॥ सूतउवाच ॥ ॥
एवंसशपथंश्रुत्वाधेनोर्व्याघ्रोद्विजोत्तमाः ॥ विस्मयेनसमायुक्तस्ततःप्रोवाचसादरम् ॥ ६४ ॥ यद्येवंव्र
जशीघ्रत्वंभूयस्त्वंनिजगोकुले ॥ पश्यपुत्रंनिजंगत्वास्तनपानेनियोजय ॥ ६५ ॥ समागच्छपुनःशीघ्रंस ॥१८॥

त्यंक्त्वापुरःसरम् ॥ मांवेत्सियदिधेनोत्वंमूढोसौवंचितोमया ॥ ६६ ॥ मिथ्यावादेनरक्षित्वानिजान्
प्राणान्नखायुधात् ॥ सत्येनार्कःप्रतपतिसत्येलोकाःप्रतिष्ठिताः ॥ ६७ ॥ सागरःसत्यमाश्रित्यमर्यादांन
व्यतिक्रमेत् ॥ अश्वमेधसहस्रंचसत्यंचतुलयाधृतम् ॥ ६८ ॥ कौतुकात्सर्वं देवैःप्राक्विशेषार्थंमहात्मभिः॥
ततोधिकत्वमापेदेसत्यमेकंसमाहितः ॥ ६९ ॥ अश्वमेधसहस्रस्यतस्मात्सत्यंनसंत्यजेत् ॥ ॥ सूतउ
वाच ॥ ॥ तच्छ्रुत्वासातथेत्युक्त्वातमनुज्ञाप्यसत्वरम् ॥ ७० ॥ जगामव्रजमुद्दिश्यपुत्रदर्शनलालसा ॥
अथाकालेचसंप्राप्तांदृष्ट्वाश्रुकलिताननाम् ॥७१॥ लेलिहानांयुतांप्राहकिंचित्क्षुब्धेनचेतसा॥७२॥किंवात्वं
चसमायातादिवाप्यद्यत्वरान्विता ॥ एकाकिनीपरित्यज्ययूथमश्रुकलानना ॥ ७३ ॥ ॥ धेनुरुवाच
॥ पिबवत्सस्तनंतावद्वृत्तांतंयदिपृच्छसि ॥ अद्यैकंदिवसंप्राप्तस्तनंकस्तेप्रदास्यति ॥ ७४ ॥ अद्याहं
मृगराजेनभ्रममाणावनांतरे ॥ संप्राप्ताक्षुत्परीतेनमुक्ताचशपथैःकृतैः॥ ७५॥ भूयस्तत्रैववयास्यामिसयत्रापि
शिताशनः ॥ तिष्ठतेमार्गमाणोमांक्षुधाविष्टोवनांतरे॥ ७६ ॥त्वयापिपुत्रनारण्येयूथंत्यक्त्वानिजंक्वचित् ॥
एकाकिनाटनीयंचाजिव्हालौल्येनचेतसा ॥ ७७ ॥ यानिकानिचदुःखानिदेहिनांव्यसनानिच ॥ तानिलौ
ल्यात्प्रजायंतेजिव्हेच्छाथविशेषतः ॥ ७८ ॥ यद्यहंतृणलौल्येननैकागच्छामिदूरतः ॥ निजंयूथंपरित्य

ज्यकिमापद्यभयंभवेत् ॥ ७९ ॥ जिव्हालौल्येप्रसक्तानांजलमध्यविनाशिनाम् ॥ मीनानामिवजंतूनाम
चिंत्योजायतेवधः ॥ ८० ॥ तस्माद्दूरतरंवत्साविषमत्वांविशेषतः ॥ परित्याज्यंततोदूरात्प्राणत्यागेपिसं
स्थिते ॥ ८१ ॥ सर्वोपींद्रियलौल्येनलोकोयंयातिसंक्षयम् ॥ तैर्जितैर्विजितंकृत्स्नंलोकद्वयमपि
स्फुटम् ॥ ८२ ॥ ॥ सूतउवाच ॥ ॥ यद्येवंशपथैःप्राप्तासकाशान्मांसभोजनात् ॥ त्वंतिष्ठतदहंमा
तर्गमिष्यामितदंतिकम् ॥ ८३ ॥ समांभक्षतुक्षुत्क्षामस्तवस्थानेनखायुधः ॥ मातृभक्तिपराणांचयाग
तिःसाममैवतु ॥ ८४ ॥ कोर्थःपुत्रेणजातेनयःप्राप्तव्यसनान्गुरून् ॥ समुद्धरतिवैशक्त्यापरित्यज्यापिजी
वितम् ॥ ८५ ॥ नास्तिगंगासमंतीर्थंनास्तिविष्णुसमःसुरः ॥ नास्तिविद्यासमंदानंनास्तिमातृसमोगुरुः
॥ ८६ ॥ त्वयाविरहितस्यापिममसृत्युरसंशयः ॥ स्तनपानंविनामातःसंभविष्यंतिसांप्रतम् ॥ ८७ ॥
त्वमद्यदिनमामंबतत्रत्वंप्रेषयिष्यसि ॥ स्वयंतत्रगमिष्यामित्वयासहनसंशयः ॥ ८८ ॥ त्वयासहविनष्ट
स्यनशोच्यंमरणंमम ॥ कीर्तिदंधर्मदंचैवत्वद्वियोगविनाशनम् ॥ ८९ ॥ ॥ धेनुरुवाच ॥ ॥ त्वमेक
स्तनुजोमह्यंकुलतंतुर्नचापरः ॥ तवच्छेदेनवंशस्यच्छेदोभवतिपुत्रक ॥ ९० ॥ वंशच्छेदेनहानिःस्यात्
पितृणांस्वर्गवासिनां ॥ अपिसत्कर्मकर्तॄणांतस्मान्नैवव्रजहिमाम् ॥ ९१ ॥ यदिमामन्यसेपुत्रगुरुत्वंकुरु

मेवच ॥ गृहेतिष्ठस्वयंपुत्रकुरुवृद्धिंयशोचिताम् ॥ १२ ॥ ॥ सूतउवाच ॥ ॥ एवमुक्त्वातुसावत्संमू
र्ध्निचाघ्रायभूरिशः ॥ स्तनपानेसुसंयोज्यप्रस्थिताकाननंप्रति ॥ १३ ॥ ततःसानंदिनीमार्गेगच्छमाना
सुदुःखिता ॥ देवतास्ताःसुतंमह्यंरक्षंतुवनसांस्थितम् ॥ १४ ॥ यदास्याद्यौवनोपेतःपुत्रोमेसमदोद्धतः ॥
विचरिष्यत्यरण्येषुरक्ष्यःसर्वसुरैस्तुसः ॥ १५ ॥ सत्यवाक्यंपुरस्कृत्ययेनसत्येनसत्वरम् ॥ अहंव्रजामितत्रै
वयत्रव्याघ्रोभविष्यति ॥ १६ ॥ तेनसत्येनपुत्रस्यममबालस्यगोकुले ॥ भवंतुश्वापदाःसर्वेसम्यग्भूपा
नसंशयः ॥ १७ ॥ एवंप्रलपमानासानंदिनीद्विजसत्तमाः ॥ संप्राप्तागोकुलंयत्रभ्रममाणावनांतरे ॥ १८ ॥
तत्रगत्वाथवृत्तांतंकथयित्वातुकृत्स्नतः ॥ आत्मीयसखिसंघस्यततोभूयोभ्यभाषत ॥ १९ ॥ हेचंपेसुप्रभे
दामेवसुधारेघटप्रभे ॥ सुशोभेसुगतेरक्तेयुक्तशृंगेस्तवोत्कटे ॥ १०० ॥ सर्वाभिःकरणीयंमेवचःश्रुत्वाखि-
लंततः ॥ सखिभावंसमाश्रित्यस्नेहोस्तियादिमांप्रति ॥ १ ॥ अनाथोवत्सकोयोमेबद्धस्तिष्ठतिगोकुले ॥
स्तनपानादिभिःकृत्यैःसर्वाभिश्चिंत्यएवसः ॥ २ ॥ गच्छमानोन्ययूथेषुयुद्ध्यमानोवृषैःसह ॥ निवार्यः
संप्रयत्नेनपरधेनुमापिव्रजन् ॥ ३ ॥ ॥ सख्युऊचुः ॥ ॥ नतत्रयुज्यतेगंतुंतवनंदिनिपुत्रकम् ॥ अ
तृणादंपरित्यज्यसमाश्रित्यकृतंवचः ॥ ४ ॥ असत्यमपिसंश्रुत्यप्राणारक्ष्याःप्रयत्नतः ॥ विवेकिभिर्यतः

प्रोक्तंवाक्यमेतन्महर्षिभिः ॥ १०५ ॥ ननर्मयुक्तंवचनंहिनास्तिनस्त्रीषुराज्येनविवाहकाले ॥ प्राणात्यये
जीवितसंश्रयेत्रपंचानृतान्याहुरपातकानि ॥ ६ ॥ तस्मादागच्छगच्छामःस्वव्रजंसहितामम ॥ निजपु
त्रंसमाश्रित्यपश्यसौख्यंतदुद्भवम् ॥ ७ ॥ ॥ नंदिन्युवाच ॥ ॥ यदेतदृषिभिःप्रोक्तमनृतंयावदेवहि ॥
प्राणात्ययेसमुत्पन्नेतत्रस्वार्थोपयुज्यते ॥ ८ ॥ अपिवर्षसयस्त्राणिप्रयुतान्यर्बुदानिच ॥ धृताःप्राणाः
पुनस्त्याज्यायतोनस्युस्थिराश्वते ॥ ९ ॥ जलबुद्बुदसंकाशेविद्युच्चलतिचंचले ॥ चलेत्रजीवितेकस्मा
त्सत्यहीनाभवाम्यहम् ॥ ११० ॥ जातस्यहिध्रुवोमृत्युर्ध्रुवंजन्ममृतस्यच ॥ तस्मादपरिहार्येर्थेनास्मि
न्सत्यंत्यजाम्यहम् ॥ ११ ॥ ॥ सख्युवाच ॥ ॥ नंदिनीत्वंनमस्कार्यायैवंधर्मधुरंधरा ॥ सत्यमार्ग
मसाश्रित्यकेवलंपारितप्यासि ॥ १२ ॥ तस्मात्सत्यस्यमाहात्म्यंनतेपापंभविष्यति ॥ अनेनैवहिसत्येनद्र
क्ष्यासित्वंसुतंपुनः ॥ १३ ॥ एवमुक्त्वाथसाताभिर्गोभिर्गौर्नंदिनीतथा ॥ एतान्सर्वाननुज्ञाप्यप्रास्थिता
व्याघ्रमंतिकम् ॥ १४ ॥ व्याघ्रोपितांसमालोक्यसंप्राप्तांसत्यवादिनीम् ॥ पश्चात्तापसमायुक्तमात्मान
मपगर्हयत ॥ ११५ ॥ धिक्मांदुष्कृतकर्माणंसदाप्राणिवधेरतम् ॥ अस्याःसत्यंसमालोक्ययज्जीवामित
दद्भुतम् ॥१६ ॥ सहस्रंभरतेकश्चितशतमन्येदशापरे ॥ ममत्वकृतपुण्यस्यस्वोदरंचापिदुर्भरम् ॥ १७ ॥

केचिद्दानायसंसृष्टाधन्याश्चतपसेपरे ॥ केवलंप्राणिनाशायप्रभुनाहंविनिर्मितः ॥ १८ ॥ अन्यज
न्मकृतैःपापैरिमांयोनिंसमाश्रितः ॥ नवेदायकृतिंभूयःकांप्रयास्याम्यतःपरम् ॥ १९ ॥ तस्मा
त्प्राणांस्त्यजिष्यामिकृत्वाप्रायोपवेशनम् ॥ येनभूयोनगच्छामिकुयोनिंपापगर्हिताम् ॥ २० ॥ अ
हंप्रभंजनोनामराजासूर्यान्वयोद्भवः ॥ मृग्याःशापेनसंप्राप्तोव्याघ्रयोनिमिमांतदा ॥ २१ ॥ त
यामृग्याचमेदत्तंशापानुग्रहकारकम् ॥ नंदिन्यादर्शनाद्धेतोर्मुक्तपापोभविष्यसि ॥ २२ ॥ सेयंचा
पिनसंदेहोनंदिनीसमुपस्थिता ॥ ममशापविनाशायस्मृतिर्मेयेनसंस्मृता ॥ २३ ॥ एवंविचिंत्य
मानस्यतस्यप्राप्ताचनंदिनी ॥ ध्यायमानाहरिंचित्तेमोक्षमार्गप्रदायकम् ॥ २४ ॥ ततःप्रोवाचहृष्टांगी
तंव्याघ्रंस्मितपूर्वकम् ॥ भीतिदंमृदुभिर्वाक्यैःपुरस्तादुपविश्यच ॥ १२५ ॥ एषाहंव्याघ्रसंप्राप्ताकृत्यं
कृत्वापुरःसरम् ॥ तेप्रसादात्सुतंदृष्ट्वापरिलिह्यचमूर्द्धनि ॥ २६ ॥ सखीनामर्पयित्वाचस्तनंदत्वायथेच्छ
या ॥ शिक्षांचविविधांकृत्वाकृतसत्यत्वमागता ॥ २७ ॥ अधुनास्वेच्छयातृप्तिंयथेच्छात्वंतथाकुरु ॥
रक्तेनचप्रभूतेनतर्पयंस्त्वंचपाक्षिणः ॥ २८ ॥ तस्यास्तद्वचनंश्रुत्वाव्याघ्रःप्रोवाचसादरम् ॥ कृतांजलि
पुटोभूत्वाप्रणिपत्यमुहुर्मुहुः ॥ २९ ॥ अहंप्रभंजनोनामराजासूर्यान्वयोद्भवः ॥ मृग्याःशापेनसंप्राप्तःपाप

योनिमिमांशुभे ॥ ३० ॥ शापस्यास्यविनाशायतयाप्रोक्तंचमांप्रति ॥ याचमानस्यदीनस्यसांप्रतंवां
छितंशुभे ॥ ३१ ॥ यदावचनसंस्थस्यनंदिनीचनरोत्तम ॥ आगमिष्यतिराजेंद्रभ्रममाणायथेच्छया ॥
॥ ३२ ॥ तदातयाकृतालापोमुक्तलापोभविष्यसि ॥ संप्राप्स्यसिपरंश्रेयस्तयासर्वंनसंशयः ॥ ३३ ॥
नूनंसानंदिनीनामत्वंधेनुरसिशोभने ॥ शापांतोयेनमेजातःप्राप्तास्मृतिरनुत्तमा ॥ ३४ ॥ तस्माद्गच्छ
निजंभूयोगोकुलेपुत्रवल्लभे ॥ नास्तिसत्यवतांलोकेकथंचिद्व्यसनाद्भयं ॥ ३५ ॥ धन्यंतद्गोकुलंभद्रेगोपो
धन्यतमश्चयः ॥ यत्रत्वंसंस्थितानित्यंयश्चत्वांपरिरक्षति ॥ ३६ ॥ एवंतुवदमानश्चत्यक्त्वाव्याघ्रतनुंत
दा ॥ नृपरूपंसमासाद्यततःप्रोवाचतांतदा ॥ ३७ ॥ मयाकृतंमहत्पापंव्याघ्ररूपेणशोभने ॥ निहताः
प्राणिनोनेकेविप्राःशूद्राश्चतुर्विधाः ॥ ३८ ॥ कालेननिहताभद्रेवंशोमेनिधनंगतः ॥ अन्येचव्यत्ययेजाताः
पार्थिवाबलदर्पिताः ॥ ३९ ॥ तस्माद्वदमहाभागेममधर्मस्यलक्षणम् ॥ येनमेजायतेशीघ्रंसर्वपापस्य
संक्षयः ॥ १४० ॥ त्वंवेत्सिनिखिलंधर्मंयदाज्ञानंपरिस्फुटम् ॥ पूतस्तेशपथैर्भद्रेधर्मद्वारेणयेकृताः ॥
॥ ४१ ॥ नंदिन्युवाच ॥ ॥ तपःकृतेप्रशंसंतित्रेतायांयज्ञमेवच ॥ द्वापारेतीर्थयात्रांचदानमेकंकलौ
युगे ॥ ४२ ॥ सर्वेषामेवदानानामेतद्दानंप्रशस्यते ॥ सर्वेषामेवजंतूनामभयंयत्प्रदीयते ॥ ४३ ॥ अ

हिंसकानिचभूतानियोहिंसतिसनिर्दयः ॥ तिर्यक्योनिसमायातःसतैर्भूयोपिवध्यते ॥ ४४ ॥ तस्माद्यद
भयंदानंदत्वासर्वेषुजंतुषु ॥ त्यक्त्वालोभादिकान्दोषान्विष्णुध्यानपरोभव ॥४५॥ संप्राप्स्यसिपरांसिद्धिं
सत्यमेतन्मयोदितम् ॥ ममापिचस्मृतिर्जातासांप्रतंनिजसत्तम ॥ ४६ ॥ शापदोषेणसंप्राप्तागोजातिंचा
प्यहंतथा ॥ अहंसरस्वतीनामनंदात्रैलोक्यविश्रुता ॥ ४७ ॥ विश्वामित्रस्यशापेनगवांयोनिंसमाश्रि
ता ॥ राजोवाच ॥ ॥ कोपराधस्त्वयातस्यविंहितोयेनशोभने ॥ तिर्यग्योनिमनुप्राप्तासर्वंमेविस्तरा
द्वद ॥ ४८ ॥ ॥ धेनुरुवाच ॥ ॥ ममोपकंठमासाद्यकुरुक्षेत्रेनरोत्तम ॥ वसिष्ठश्चाश्रमंचक्रेविश्वामि
त्रश्चसन्मुनिः ॥ ४९ ॥ ताभ्यांपरस्परंस्पर्धामहतीतपसःकृता ॥ यस्याःकृतेमहद्वैरंप्राणांतिकमुपस्थि
तम् ॥ १५० ॥ ततःप्रोवाचमांक्रुद्धोविश्वामित्रोमहातपाः ॥ वसिष्ठंजलवेगेनस्नातुकाममिहान
य ॥ ५१ ॥ येनत्वंविकलंतंचस्रोतैरुभयपूरितै ॥ घातयित्वामहावेगेस्वमाश्रममुपागतं ॥ ५२ ॥
अथोक्तःसमयाभूयोनाहंद्विजवधोद्यमम् ॥ करिष्यामिमुनिश्रेष्ठःसोपिविप्रोदुरत्यय ॥ ५३ ॥ ततःक्रुद्धे
नचोक्तास्मिनकृतंयन्मयोदितम् ॥ त्वयातत्प्राप्यमद्वाक्यात्तिर्यग्योनिंविगर्हिताम् ॥ ५४ ॥ तंशापंचसमा
साद्यमयासंप्रार्थितोमुनिः ॥ शापांतायमुनिश्रेष्ठोनप्रसादमथागतम् ॥ ५५ ॥ ततोहंदुःखिताप्राप्तायत्रदे

वःपितामहः ॥ पितामहेनराजेंद्रचाश्रुपूर्णाकुलेक्षणा ॥ ५६ ॥ कथितंशापवृत्तांतंविश्वामित्रसमुद्भवम् ॥
श्रुत्वासर्वमशेषेणनिर्दोषत्वंतथात्मनः ॥५७॥ तथाहंतेनचोक्तास्मिमादुःखंकुरुपुत्रिके ॥ नतत्प्रशस्यतेकर्तु
कथंचिद्वाक्यमन्यथा ॥ ५८ ॥ तस्माद्रोरूपमासाद्यकिंचित्कालंधरातले ॥ त्वंतिष्ठशापविलयंयतःस
र्वासुयोनिषु ॥ ५९ ॥ पूजनीयास्तिगौर्यस्मात्पितृदेवहविःप्रदा ॥ अस्तिमेदयितंतीर्थंपुष्करंनामभूत
ले ॥ ६० ॥ तस्यास्तवसमावासस्तत्रभद्रेभविष्यति ॥ यदाप्रभंजनोराजाव्याघ्रत्वंसमुपागतः ॥ ६१ ॥
करिष्यतित्वयासार्द्धंसंवादंधर्मसंभवम् ॥ तदातवतथातस्यद्वयोःशापस्यसंक्षयः ॥ ६२ ॥ भविष्यतिनसं
देहःसत्यमेतन्मयोदितम् ॥ ततःपरंमहाभागेतत्रत्वमपराङ्मुखी ॥ ६३ ॥ गमिष्यसिविनाशायसर्वपापस्य
देहिनाम् ॥ प्राचीसरस्वतीतत्रतेकरिष्यतिसंगमम् ॥ ६४ ॥ तीर्थाशेषसमोपेताविशेषात्पावनायच ॥ य
स्तत्रसंगमेपुण्येत्रयोदश्यांसमाहितः ॥ ६५ ॥ करिष्यतिनरःस्नानंसयातिपरमांगतिम् ॥ पितॄपिंडप्र
दानंयस्तेकरिष्यतिसंगमे ॥ संप्राप्स्यातिफलंसर्वंपितृमेधसमुद्भवम् ॥ ६६ ॥ ॥ सूतउवाच ॥ ॥ एवं
सावदमानापिसालिलत्वमुपागता ॥ नंदिनीसापिगौर्जातामत्स्यकच्छपसंकुला ॥ ६७ ॥ सोपिराजास
माकर्ण्यदृष्ट्वाचाद्भुतमुत्तमम् ॥ तस्यास्तंसंगमंप्राप्यसरस्वत्यास्तुपुण्यदम् ॥ ६८ ॥ कृत्वाश्रमपदंपुण्यं

तपस्तेपेपरंततः ॥ गतश्चपरमांसिद्धिंत्रिदशैरपिदुर्लभा ॥ ६९ ॥ सस्वल्पेनापिकालेनजरामरणवर्जित
म् ॥ एवंसानंदिनीनाम्नानंदालोकेप्रकीर्तिता ॥ ७०॥ यस्यासंदर्शनेनापिनरःपापात्प्रमुच्यते ॥ एतद्वः
सर्वमाख्यातंनंदामाहात्म्यमुत्तमम् ॥ ७१ ॥ यच्छ्रुत्वापिनरःपापात्मुच्यतेदिनसंभवात् ॥ १७२ ॥
इतिश्रीपद्मपुराणेपुष्करमाहात्म्येनंदिनीवृत्तकथनंनामएकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ चतुर्थेदिवसेविप्रास्तेप्रोक्ताब्रह्मणास्वयम् ॥ मध्यान्हसेवनंचाद्यचतुर्दश्यांसमाहि
तैः ॥ १ ॥ अजोगंधपदेकार्यवचनान्ममसांप्रतम् ॥ कार्तिकस्यासितेपक्षेचतुर्दश्यांसमाहितैः ॥ २ ॥
स्नानंकृत्वान्हदेपुण्येप्रपश्येद्योजगंधकम् ॥ सर्वपापविनिर्मुक्तःशिवलोकेमहीयते ॥ ३ ॥ यस्तत्रकुरुते
श्राद्धंपितृश्रद्धासमन्वितः ॥ सतारयेत्पितॄन्मर्त्योनरकादपिसत्वरम् ॥ ४ ॥ यस्तत्रकपिलान्दद्याद्ब्राह्म
णायजितात्मने ॥ सतारयेदतीतानांपुरुषाणांशतत्रयम् ॥ ५ ॥ तस्यैवपश्चिमेभागेतुंगशृंगसमाश्रित
म् ॥ पर्वतस्यमहादेवंस्वर्णचूलमितिश्रुतम् ॥ ६ ॥ यस्तंपश्यतितत्रैवस्नात्वापुण्यतमेन्हदे ॥ नसप
श्यतिभूयोपिगर्भवासंविगर्हितम् ॥ ७ ॥ यस्तत्रत्यजतेप्राणानभृगुपातेचमानवः ॥ सपार्थिवींतनूंत्य
क्त्वानान्यज्जन्मसमाप्नुयात् ॥ ८ ॥ तथातत्रास्यदेवस्यछागरूपस्यशूलिनः ॥ पदमुत्तरदिग्भागेसर्व

पातकनाशनम् ॥ ९ ॥ यस्तुस्नात्वाशुचिर्भूत्वागंधपुष्पानुलेपनैः ॥ पूजयेत्फलवस्त्रैश्चनैवेद्यैर्धूपदीप
कैः ॥ १० ॥ सर्वांछितान्लभेत्कामान्सदाजन्मनिजन्मनि ॥ अत्रश्लोकाःपुरागीतास्तथादेवेनविष्णु
ना ॥ ११ ॥ स्नात्वातत्रह्रदेपुण्येदृष्ट्वामाहेश्वरंपदम् ॥ स्वर्णचूलंसमालोक्यकिंमर्त्यैःपरितप्यते ॥
॥ १२ ॥ तस्माद्गच्छतविप्रेंद्रास्तत्रशीघ्रंसमाहिताः ॥१३॥ स्नात्वादेवसमालोक्यपूजयित्वाचतत्पदम् ॥
अभ्येत्यचपुनःकर्मयाज्ञिकंकुरुताखिलाः ॥१४॥ ॥सूतउवाच॥ ॥सत्यंतद्वचनंश्रुत्वासर्वेतेद्विजसत्तमाः
॥ ज्येष्ठकुंडेपुरास्नात्वाप्रातःसंप्रस्थितास्ततः ॥ १५ ॥ अजोगंधह्रदेस्नात्वाततोदृष्टेश्वरेश्वरम् ॥
अजोगंधंतदाप्रस्थंस्वर्णचूलंसुदुर्गमम् ॥ १६ ॥ पदंमाहेश्वरंदृष्ट्वापूजयित्वाचभक्तितः ॥ सत्वरंपुष्क
रेप्राप्ताभूयोपिमखमंडपे ॥ १७ ॥ कृतकृत्याःप्रहृष्टास्तेतेजसापरिवारिताः ॥ चक्रुस्तत्रक्रियाःसर्वामखे
पैतामहेखिलाः ॥ १८ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येअजोगंधमाहात्म्यंनामद्वादशोऽध्यायः॥१२
॥ ऋषियऊचुः ॥ ॥ अजोगंधःकथंदेवःसंजातःसमहेश्वरः ॥ कस्मिन्कालेपदंदत्तंतत्रतेनमहात्मना ॥
॥ १ ॥ तथातत्रगिरेःशृंगेसदेवःस्वर्णचूलिकः ॥ केनसंस्थापितःसर्वंविस्तरात्सूतनोवद ॥ २ ॥ ॥
सूतउवाच ॥ ॥ प्रश्नभारोमहानेषभवद्भिःसमुदाहृतः ॥ तथापिकीर्तयिष्यामिनमस्कृत्यपिनाकिन

म् ॥ ३ ॥ आसीत्पूर्वंमहारौद्रोबाष्कलिर्नामदानवः ॥ अजेयःसर्वदेवानांमानुषाणांविशेषतः ॥ ४ ॥
तेनतत्रतपस्तप्तंपुष्करेद्विजसत्तमाः ॥ यावद्वर्षसहस्राणिदशब्राह्मणसत्तमाः ॥ ५ ॥ षष्ठान्नकालभोजी
चवत्सराणांमहासुरः ॥ सहस्राद्वितयंयावद्ध्यायमानःपितामहम् ॥ ६ ॥ ततःशीर्णफलाहारस्तावत्का
लंबभूवसः ॥ षष्ठकालाशनःसम्यक्श्रद्धापूतेनचेतसा ॥ ७ ॥ ततःशीर्णानिपत्राणिषष्ठेकालेसदानवः ॥ भ
क्षयामासहृष्टात्माब्रह्माराधनतत्परः ॥ ८ ॥ सहस्रंत्रितयंयावद्वर्षाणांद्विजसत्तमाः ॥ जलाहारोथसंवृ
त्तोयावत्कालंसमाहितः ॥ ९ ॥ वायुभक्षस्ततोयज्ञेसेवयन्वन्हिपंचकम् ॥ ग्रीष्मेहेमंतकालेचसलिलंच
दिवानिशम् ॥ १० ॥ वर्षास्वाकाशशायस्यात्त्यक्त्वासर्वपरिग्रहम् ॥ एवंवर्षसहस्रांतेदशमेद्विजसत्त
माः ॥ ११ ॥ संप्राप्तेथगतस्तुष्टिंतस्यचैवपितामहः ॥ ततःप्रोवाचसंहृष्टतस्यसंदर्शनेस्थितः ॥ १२ ॥
॥ ब्रह्मोवाच ॥ ॥ बाष्कलेपरितुष्टोस्मिवरंवरयपुत्रक ॥ अवश्यंतेप्रदास्यामियद्यपिस्यात्सुदुर्लभम् ॥
॥ १३ ॥ ॥ बाष्कलिरुवाच ॥ ॥ सर्वासांदेवयोनीनांमानुषाणांविशेषतः ॥ यथाभवाम्यवध्यार्हत
थाकुरुपितामह ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ सर्वासांदेवयोनीनांअद्यप्रभृतिदानव ॥ मानुषाणांवि
शेषेणत्वंचावध्योभविष्यसि ॥ १५ ॥ मत्प्रसादादसंदिग्धंसांप्रतंभुवनत्रये ॥ तस्मादेतत्तथेत्युक्त्वागृहंग

त्वानिजंपुनः ॥ १६ ॥ कुरुराज्यंमहाभागभुंक्ष्वभोगान्मनोरमान् ॥ सतथेतिज्ञायप्रणिपत्यपितामहं
॥ १७ ॥ जगाममंदिरंहृष्टोनिजंब्राह्मणसत्तमाः ॥ व्रतंतेनगृहीतेनप्रतिष्ठेनगृहंप्रति ॥ १८ ॥ मयापि
तामहोनित्यंपुष्करारण्यवासिना ॥ दृष्ट्वाउत्तंप्रभोक्तव्यंस्नात्वातत्रह्रदेशुभे ॥ १९ ॥ ततःस्वहर्म्यमा
साद्यवरःप्राप्तःपितामहात् ॥ योजातःकथयामाससुहृदांविस्तरेणसः ॥ २० ॥ ततस्तेदानवाहृष्टास्त
मूचुर्दितिनंदनम् ॥ यद्येवंशत्रुनाशायकिन्नयत्नोविधीयते ॥ २१ ॥ वयंज्येष्ठायतःश्रेष्ठाःसर्वेषांचदिवौ
कसां ॥ अद्यप्रभृतिगृण्हीमोयज्ञभागान्धरातले ॥ २२ ॥ ॥ सूतउवाच ॥ ॥ सतथेतिप्रतिज्ञायबा
ष्कलिर्दानवोत्तमः ॥ बाढमितिवचःप्रोक्ताचकारोद्यममुत्तमम् ॥ २३ ॥ नाशायसर्वदेवानांप्रस्थितस्त्रिदि
वंप्रति ॥ सैन्येनमहतायुक्तश्चतुरंगेणतत्क्षणात् ॥ २४ ॥ दूतंचप्रेषयामासशक्रायतदनंतरम् ॥ परांपु
ष्टिंचसंप्राप्तादानवाबलवत्तराः ॥ २५ ॥ त्रैलोक्येश्वर्यमासाद्ययथुःसौख्यमनुत्तमम् ॥ २६ ॥ इतिश्रीप
द्मपुराणेपुष्करमाहात्म्येदानवोत्पत्तिर्नामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ त्रैलोक्यपदवींप्राप्यबाष्कलिर्दानवोत्तमः ॥ चकारविधिवद्राज्यंनयधर्मपुरःसरम् ॥
॥ १ ॥ नित्यंचपुष्करंगत्वाप्रपश्यतिपितामहम् ॥ स्नात्वातत्रह्रदेपुण्येयत्रतप्तंपुरातपः ॥ २ ॥ त

तोविमानमासाद्यप्रयातित्रिदशालयम् ॥ शक्रोपिशंकरंनित्यंआराधयतिभक्तितः ॥ ३ ॥ भृत्यवत्सर्वं
कृत्यानिकुर्वन्सतपआश्रितः ॥ ततोवर्षसहस्रांतेविज्ञप्तस्तेनसत्वरम् ॥ ४ ॥ प्रस्तावंश्रुतमासाद्यस्तु
त्वास्तोत्रैःपृथग्विधैः ॥ त्वयानाथेनदेवेशराज्यंमेदानवैर्हृतम् ॥ ५ ॥ यज्ञभागसमोपेतंविनिर्जित्यमहाह
वे ॥ तस्मात्कुरुप्रसादंमांतंसूदयादितेःसुतम् ॥ ६ ॥ त्वत्प्रसादात्पुनर्येनसंप्राप्स्यामित्रिविष्टपम् ॥
॥ श्रीभगवानुवाच ॥ ॥ अवध्यःसर्वदेवानांसकृतःपद्मयोनिना ॥ ७ ॥ मानुषाणांचसर्वेषांशस्त्राणां
चतथैवच ॥ तस्मात्तवकृतेशक्रकृत्वाअजमयंवपुः ॥ ८ ॥ तंहनिष्यामिदैत्येंद्रंमास्तुतेमानसोज्वरः ॥
सनित्यंपुष्करेयातिविमानवरमाश्रितः ॥ ९ ॥ एकाकीदर्शनार्थायदेवस्यपरमेष्ठिनः ॥ तत्रैवचहानिष्या
मिशृंगाग्राभ्यामसंशयम् ॥ १० ॥ नान्यथातस्यनाशःस्यात्कथंचिदपिवासव ॥ एवमुक्त्वाततोदेवोवि
धायाजमयंवपुः ॥ ११ ॥ कोपेनमहतायुक्तःप्रस्थितःपुष्करंप्रति ॥ सोपिदानवशार्दूलःसंप्राप्तस्तंन्हृदं
ततः ॥ १२ ॥ स्नानार्थंपुरतोयावदजंपश्यतिदूरतः ॥ तंदृष्ट्वाचिंतयामासनेदृक्कूयोनोभवेदजः ॥
॥ १३ ॥ पर्वतादधिकोन्नूनंदेवःकश्चित्समागतः ॥ छागरूपंसमालोक्यवधेयंनिशितैःशरैः ॥ १४ ॥
मांमेमास्यकरिष्यामिततस्तूर्तिमहासुरैः ॥ ॥ मंत्रिणऊचुः ॥ ॥ देवदानवमर्त्यानांमवध्यस्त्वंपुराकृतः ॥

॥ १५ ॥ब्राह्मणाचतिरश्च्यानांतस्मान्माक्षिपसायकान् ॥ एवनूनंमहादेवोवासुदेवोथवाप्रभो ॥ १६ ॥
शक्रोवातवनाशायप्राप्तस्तद्गम्यतांगृहम् ॥ १७ ॥ ॥ बाष्कलिरुवाच ॥ ॥ नाहंरिपुंसमालोक्यनि
वर्तामिकथंचन ॥ विशेषात्पुष्करारण्येपुण्येस्मिन्पापनाशने ॥ १८ ॥ यद्येषविबुधःकश्चिद्रूपेणानेनसंग
तः ॥ तन्मेपुण्योदयोजातोहन्म्येनंनिशितैःशरैः ॥ १९ ॥ निष्कंटकंकरिष्यामित्रैलोक्यंसचराचरम् ॥
हत्वाविष्णुंचरुद्रंचशक्रंचतदनंतरम् ॥ २० ॥ मयाशक्रःपुरात्यक्तोवधंप्राप्तोपिसंगरे ॥ घृणयाबांधवो
ह्येषसापत्नोयंततोमम ॥ २१ ॥ अथैवचअहंतावत्सर्वांछतिपुरंदरः ॥ तन्निर्देवंकरिष्यामिजनमद्यजग
त्त्रये ॥ पितामहंपरित्यक्त्वासत्यमेतन्मयोदितम् ॥ २२ ॥ ॥ सूतउवाच ॥ ॥ एवंप्रवदतस्तस्यदा
नवस्यद्विजोत्तमाः ॥ उत्कूर्दनमजश्चक्रेमेमेप्रोक्त्वामुहुर्मुहुः ॥ २३ ॥ उत्प्लुत्योत्पतितोयत्रशिलापृष्ठेस
छागलः ॥ पदानियत्रजातानितद्रूपाणिब्रहंतिच ॥ २४ ॥ दृश्यंतेद्यापिविप्रेंद्राःप्रसिद्धानिजगत्त्रये ॥
यैर्दृष्टैरपिपापेनतत्क्षणान्मुच्यतेजनः ॥ २५ ॥ किंपुनःपूजितैःपुष्पैःश्रद्धापूतेनचेतसा ॥ तस्माद्दुष्कृति
नस्थानात्सदेवश्छागरूपधृक् ॥ २६ ॥ तस्मिन्शिलातलेमर्त्योभक्त्यास्तुवतितत्क्षणात् ॥ सनिरोगश्च
सर्वेषांआत्महापरमेश्वरः ॥ २७ ॥ उत्कूर्दमानमालोक्यअजंबाष्कलिनातदा ॥ समारोप्यधनुश्चैवशरांश्चै

वविषोपमान् ॥ २८ ॥ अजोपिसहशंमन्येतथाहर्षसमन्वितः ॥ बाणाभावेततोदैत्यःखड्गमादायचर्मच॥
॥ २९ ॥ प्रययौसन्मुखस्तस्यातिष्ठतिष्ठेतिचाब्रुवन् ॥ तमायांतंसमुद्वीक्ष्यचर्मखड्गधरंतदा ॥ ३० ॥
वेगादभ्येत्यजग्राहशृंगाग्राभ्यामजस्तदा ॥ शृंगकोटिप्रहारेणक्षिप्तांगोरुधिरप्लुतः ॥ ३१ ॥ गतासुःपाति
तोभूमौछिन्नमूलइवद्रुमः ॥ तस्मिन्निपतितेभूमौगतास्तत्रैवमंत्रिणः ॥ ३२ ॥ गत्वाशीघ्रतरंस्वर्गेप्रोचुर
न्यान्महासुरान् ॥ केनापिछागरूपेणदेवेनाथानिपातिते ॥ बाष्कलिःपुष्करारण्येतच्छीघ्रंगम्यतामि
ति ॥ ३३ ॥यावन्नायातिदेवेशोदेवसैन्यैःसमावृतः ॥ आदित्यैर्वसुभिरुद्रैर्विश्वेदेवैःसगुह्यकैः ॥३४॥ तच्छ्रु
त्वादानवाःसर्वेवज्रपातसमंवचः ॥ पलायनकृतोत्साहाहृष्ट्वास्थानंसुदुस्त्यजम् ॥ ३५ ॥ विदार्यमेदि
नीपृष्ठंपातालतलवासिनः ॥ एतस्मिन्नंतरेप्राप्ताःसर्वेदेवाःसवासवाः ॥ ३६ ॥ ब्रह्माणमग्रतःकृत्वागतादै
त्यगृहांतिकम् ॥ हर्षेणमहतायुक्तभयंत्यक्त्वाचदूरतः ॥ स्वयंयत्रस्थितोदेवश्छागरूपोमहेश्वरः ॥ ३७ ॥
चक्रुस्तुतिंततस्तस्यविनयावनतास्थिताः ॥ हर्षेणमहतायुक्ताःप्रणिपत्यमुहुर्मुहुः ॥ ३८ ॥ जयदेवजया
जेयजयपापहरप्रभो ॥ जयसर्वगसर्वेशजयसर्वप्रदप्रभो ॥ ३९ ॥ जयसृष्टिकराचिंत्यजयस्थितिकराव्यय ॥
जयेजयकराचिंत्यजयसूक्ष्मतपःक्षय ॥ ४० ॥ जयजन्मजरानाशविहीनजयशंकर ॥ जयसर्वविषादघ्नेश

शांकक्तशेखरः ॥ ४१ ॥ जयत्र्यंबकलोकेशजयभूतिप्रियःप्रभो ॥ त्वमक्षपापभूतेशभूतभव्यप्रकाशकः॥
॥ ४२ ॥ त्वंब्रह्मात्वंहरिःशक्रस्त्वंचंद्रस्त्वांदिवाकरः ॥ त्वमग्निस्त्वंजलंपृथ्वीस्त्वंवायुस्त्वंजगद्गुरुः ॥ ४३ ॥
किंचात्रबहुनोक्तेनयत्किंचिद्दृश्यतेभुवि ॥ स्वर्गेवाथचपातालेतत्सर्वंत्वन्मयंविभो ॥ ४४ ॥ यथाकाष्ठनि
गूढेनसर्वंव्याप्तंहविर्भुजा ॥ तिलंतैलेनचाज्येनदाधितद्वत्त्वयाजगत् ॥ ४५ ॥ ॥ सूतउवाच ॥ ॥ त
च्छ्रुत्वाशंकरप्राहपुरस्थंप्रपितामहम् ॥ तुष्टोहंतवलोकेशस्तोत्रेणानेनपद्मज ॥४६॥ वरंवरयदेवेशयद्यपि
स्यात्सुदुर्लभम् ॥ अवश्यंतेप्रदास्यामिवदशीघ्रंपितामह ॥ ४७ ॥ ॥ पितामहउवाच ॥ ॥ अवश्यं
यदिदेयोमेवरःपशुपतेत्वया ॥ एतन्मेपुष्करंतीर्थंमेध्यंस्यात्स्वसमाश्रयात् ॥ ४८ ॥ एवमुक्तेततस्तेनब्र
ह्मणाद्विजसत्तमाः ॥ निर्भिद्यधरणीपृष्ठंतत्क्षणाल्लिंगमुत्थितम् ॥ ४९ ॥ ततस्तास्मिन्निजंगात्रमर्चयामा
सशोभनं ॥ प्रोवाचाथचतुर्वक्रमेघगंभीरयागिरा ॥ ५० ॥ कार्तिकस्यसितेपक्षेचतुर्दश्यामहंसदा ॥ कै
लासादागमिष्यामिलिंगेस्मिन्नात्रसंशयः ॥ ५१ ॥ तथात्रैवचतुर्दश्यांशुक्लायांपद्मसंभव ॥ शेषकाले
त्वजोगंधच्छागजोत्रभविष्यति ॥ ५२ ॥ यस्तंभक्त्यासमोपेतःस्नात्वात्रचमहाह्रदे ॥ आघ्रायमामकं
लिंगंपुष्पाद्यैःपूजयिष्यति ॥ ५३ ॥ बाल्येवयसियत्पापंवार्धकेयौवनेपिवा ॥ सर्वंचतत्क्षणादेवनाशयि

ष्यत्यसंशयः ॥ ९४ ॥ अजगंधादिमंलिंगंअजोगंधमितिश्रुतम् ॥ विख्यातंत्रिषुलोकेषुप्रयास्यतिनसंश
यः ॥ ९५ ॥ एतानिचपदान्यत्रमामकानिपितामह ॥ पूजयिष्यंतियेभक्त्यातेयास्यंतिपरांगतिं ॥ ९६॥
॥ सूतउवाच ॥ ॥ एवमुक्त्वासदेवेशस्तस्मिंल्लिंगेनिजंवपुः ॥ स्थापयित्वाचिरंनामगतःसद्विजसत्त
माः ॥ ९७ ॥ ततोदेवगणाःसर्वेहर्षेणमहतान्विताः ॥ तल्लिंगंपूजयित्वाथनमस्कृत्यमुहुर्मुहुः ॥ ९८ ॥
गतास्त्रिविष्टपंभूयःशक्रंकृत्वापुरःसरम् ॥ यज्ञभागानिजाःप्राप्ताभूयोपिचयथापुरा ॥ ९९ ॥ एतद्वःसर्व
माख्यातंयत्पृष्टोस्मिद्विजोत्तमाः ॥ अजोगंधस्यचोत्पत्तिस्तत्पादानांशुभावहा ॥ ६० ॥ कथाचकीर्ति
तासम्यक्श्रवणात्पापनाशिनी ॥ किंपुनःपूजनात्स्पर्शात्नमस्काराद्विशेषतः ॥ ६१ ॥ इतिश्रीपद्मपु
राणेपुष्करमाहात्म्येअजोगंधोत्पत्तिर्नामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ अथयज्ञदिनेप्राप्तेपंचमेद्विजसत्तमाः ॥ ऋत्विजःपद्मजंप्रोचुःप्रातःस्नात्वाद्यपुष्क
रे ॥ १ ॥ अद्यसंध्यादिकंदेवकृत्वायत्रापितामह ॥ कूर्मःशीघ्रंसमाचक्ष्वंयेनगच्छामहेवयम् ॥ २ ॥ ॥
॥ पितामहउ० ॥ ॥ अत्रमौनेनकर्तव्यात्रिपुष्करप्रदक्षिणा ॥ स्नानंचब्राह्मणःश्रेष्ठाःक्रमशःपितृतर्पणं ॥
॥ ३ ॥ तच्छ्रुत्वाथद्विजेंद्रास्तेतूष्णींभूताःप्रदक्षिणाम् ॥ पुष्करत्रितयेचक्रुर्यथोक्ताःपद्मयोनिना ॥ ४ ॥

यज्ञवाटंसमभ्येत्यपुनश्चक्रुर्मखक्रियाम् ॥ यायस्यपूर्वमुद्दिष्टासातथेतिक्रियाहिते ॥५॥ ॥ऋषयऊचुः ॥
किमर्थंक्रियतेतेषांपुष्कराणाप्रदक्षिणा ॥ मौनेनकिंफलंतस्याविस्तरात्सूतकीर्तय ॥ ६ ॥ सूतउवाच ॥
पुरासीत्पार्थिवोनामबृहद्रथइतिस्मृतः ॥ शरण्यश्चवदान्यश्चगौडदेशेसमुद्भवः ॥ ७ ॥ ससमेत्यसदाभ
त्त्यासामात्योज्येष्ठपुष्करे ॥ सभार्यश्चततश्चक्रेकुंडत्रयप्रदक्षिणम् ॥ ८ ॥ कार्तिक्यांमौनमास्थायददा
तिश्रद्धयान्वितः ॥ यथोक्तविधिनास्नानंततश्चपितृतर्पणं ॥ ९ ॥ नान्यच्चकुरुतेकिंचित्प्रोच्यमानोपिस
द्विजैः ॥ ततोगच्छतिराजेंद्रभूयोपिद्विजसत्तमाः ॥ १० ॥ एकरात्रिंचमौनेनपौर्णमासीसमुद्भवम् ॥ वर्षे
वर्षेचभूपालोदूरादभ्येत्ययत्नतः ॥ ११ ॥ कुंडत्रयेस्यमौनेनप्राकारप्रदक्षिणाम् ॥ अथस्नात्वाथराजासौ
पश्यन्वैमुनिसत्तमान् ॥ १२ ॥ उपविष्टांश्चविधिवद्वेदजाप्यपरायणान् ॥ मार्कंडेयोगालवश्चकौशिकोभा
र्गवस्तथा ॥ १३ ॥ तथान्येशतशस्तत्रब्राह्मणःपुरतास्थिताः ॥ एतस्मिन्नंतरेराजासोपिप्राप्तोबृहद्रथः ॥
॥ १४ ॥ कृत्वात्रिपुष्करीयात्रांपितामहदिदृक्षयः ॥ ततोब्रह्माणमालोक्यसंपूज्यप्रणिपत्यच ॥१५ ॥ ब्रा
ह्मणांस्तान्नमश्चक्रेजानुभ्यामवनींगतः ॥ उपविष्टश्चतन्मध्येविनयावनतास्थितः ॥ १६ ॥ अथतेब्राह्मणा
श्चक्रुस्तस्याग्रेविविधाःकथाः ॥ राजर्षीणांपुराणानांदेवर्षीणांचभोजनाः ॥ १७ ॥ ततःप्राप्तेकथांतेचक

स्मिश्चित्समहीपतिः ॥ पृष्टस्तैर्ब्राह्मणैःसर्वैःकौतूहलसमन्वितैः ॥ १८ ॥ राजन्संदैवकार्तिक्यांसमागच्छ
सिपुष्करे ॥ पौर्णमास्यांपुनःप्राप्तःप्रगच्छसिगृहंप्रति ॥ १९ ॥ पंचरात्रमिहप्रोक्तायात्रापुष्करसंभवा ॥
करोषिसुसमृद्धोहितस्माद्धिकतमंदिनम् ॥ २० ॥ कस्मात्प्रदक्षिणांचैवन्यायतःपुष्करत्रये ॥ प्रकारोषि
महाराजपरंयत्नंसमाश्रितः ॥ २१ ॥ नतथादानरक्तस्त्वंनचदेवप्रपूजने ॥ नश्राद्धेनजपेहोमेपश्यामस्त
वसादरम् ॥ २२ ॥ तथाप्रदक्षिणांकृत्वापुष्त्ररात्रितयस्यतु ॥ एवंन्नःकौतुकंभातिनचेद्गुह्यंप्रकीर्तय ॥
॥ २३ ॥ अवश्यंकारणंवेत्सित्वंप्रदक्षिणसंभवम् ॥ ॥ बृहद्रथउवाच ॥ ॥ एतन्मेपुष्करंगुह्यंयत्पृष्टोहंद्वि
जोत्तमाः ॥ २४ ॥ तथाप्यद्यवदिष्यामिरहस्यंवानरक्ष्यते ॥ अहमासीत्पुराविप्राःपुष्करेत्वन्यजन्मनि ॥
॥ २५ ॥ मूकोनिर्धनतांप्राप्तःसर्वधर्मबहिष्कृतः ॥ ततःकरोमिप्राणानांसर्वेषांपशुपालनम् ॥ २६ ॥ प्रा
णायत्राकृतेविप्राःसर्वेषांचविवर्जितः ॥ कस्यचित्त्वथकालस्यगौरेकासस्यलालसा ॥ २७ ॥ कस्यचिद्दुष्टवि
प्रस्यथितापुष्करपूर्वतः ॥ २८ ॥ तस्याःप्रदक्षिणाजाताभ्रमंत्याःपुष्करत्रये ॥ अथतस्याःसमायातः स्वा
मीरात्रौगृहेमम ॥ २९ ॥ रूपयत्परुषैर्वाक्यैर्धिक्पापकिमिदंकृतम् ॥ नसमेताद्यमधेनु सुखदोहाघटश्र
वा ॥ ३० ॥ तस्मादानयमेशीघ्रंयावद्वत्सोनपीड्यते ॥ नोचेत्प्राणान्हरिष्यामितवप्रातर्नसंशयः ॥३१॥

एवमुक्त्वासमाकर्षन्समाक्रोशैस्तथाद्विजः ॥ ग्रहान्निसारयमासप्रहारैर्जर्जरीकृतः ॥ ३२ ॥ कार्तिकीदि
वसेतत्रसुस्नातंज्येष्ठपुष्करे ॥ बुभुक्षितंदयाहीनोभोज्यकालेषुसंस्थितं ॥ ३३ ॥ सचापिकौमुदीरात्रिः
पूर्णचंद्रेणशोभिता ॥ दिव्यवासाविनिष्क्रांतोवीक्ष्यमाणोगवांपदम् ॥ ३४ ॥ दिवसाभ्यधिकाजाताम
पुण्योदयेतथा ॥ ततोमयापदंलब्धंतस्याधेनोःसमंततः ॥ ३५ ॥ भ्रममाणेनविप्रेंद्राज्येष्ठपुष्करपूर्वतः ॥
॥ ३६ ॥ अथतस्यास्तुसंलग्नःप्रगच्छामिशनैःशनैः ॥ किंचित्संतोषसंयुक्तःसंयोगैरितिचिंतयन् ॥
॥ ३७ ॥ पदंतत्रविनिष्क्रांतंपश्चिमेनद्विजोत्तमाः ॥ पुष्करात्रितयस्यापितस्याधेनोःपरिस्फुटम् ॥
॥ ३८ ॥ भ्रमताभ्रममाणाचस्वच्छयाद्विजसत्तमाः ॥ ३९ ॥ तांचलगुटघातेनताडयित्वामुहुर्मु
हुः ॥ शुद्धमार्गेसमासाद्यसमानीतात्रिपुष्करे ॥ ४० ॥ निवेदिताचविप्रस्ययस्यसाब्राह्मणोत्तमाः ॥ ततो
निजगृहंगत्वाक्षुत्क्षामःश्रमपीडितः ॥ ४१ ॥ कृतवान्भोजनंचैवदृष्ट्वादेवपितामहम् ॥ ततःकालेनसंजा
तंपंचत्वंमेद्विजोत्तमाः ॥ ४२ ॥ तस्यधेनोश्चविप्रस्यतस्यापिचदुरात्मनः ॥ तत्प्रभावादहंजातो
गौडदेशेनराधिपः ॥ ४३ ॥ दशार्णाधिपतेःकन्यासापिजाताघटस्रवा ॥ साजाताममपत्नीचप्रद
क्षिणप्रभावतः ॥ ४४ ॥ सोपिमंत्रीसमुत्पन्नोब्राह्मणोममसांप्रतं ॥ ब्राह्मणस्यकुलेजातोममप्रेरणक

र्मणा ॥ ४५ ॥ सएवब्राह्मणोमंत्रीसेवंभार्याघटस्रवा ॥ सोऽहंवैश्योमहामूकःप्रदक्षिणप्रभावतः ॥
॥ ४६ ॥ जातिस्मृतित्रयाणांचसंजातातेनकर्मणा ॥ तथेयमुत्तमाजातिरैश्वर्येणसमन्विता ॥ ४७ ॥
भक्तिबाह्यातदास्माभिर्विहितात्रप्रदक्षिणा ॥ पुष्करत्रितयेविप्रास्तथालौल्यात्प्रमत्सरात् ॥ ४८ ॥ तद
हंस्मरमाणस्तुसभार्योमंत्रिणासह ॥ कार्तिकीदिवसेमौनीप्रकरोमिप्रदक्षिणाम् ॥ ४९ ॥ नकरोमिचय
द्यात्रांपंचरात्रमिहाद्विजाः ॥ तच्छृणुध्वंवदिष्यामिसर्वेषांचद्विजन्मनाम् ॥ ५० ॥ अत्रसंख्याविहीनानि
तीर्थान्यायतनानिच ॥ लिंगानिमेदिनीपृष्ठेचिराल्लोपंगतानिच ॥ ५१ ॥ दिव्यदृष्ट्याप्रपश्यामितानिस
र्वाण्यहंद्विजाः ॥ नैरंतर्याणिसंस्थानिसर्वतश्चपदेपदे ॥ ५२ ॥ कृच्छ्रात्पदंप्रयच्छामिपरिहृत्यचतानिवै
तथामूत्रपुरीषंचकथंकुर्यामहंद्विजाः ॥ ५३ ॥ पश्यमानोहिलिंगानिवासुदेवस्यकीर्तयः ॥ कालेनलोप
मापन्नानान्यत्किंचित्प्रयोजनम् ॥ ५४ ॥ एतद्वःसर्वमाख्यातंरहस्यंपरमंयथा ॥ त्रिपुष्करस्यमाहात्म्यं
प्रदक्षिणसमुद्भवम् ॥ ५५ ॥ ॥ सूतउवाच ॥ ॥ ततस्तेब्राह्मणाःसर्वेविस्मयोत्फुल्ललोचनाः ॥ प्र
प्रच्छुःसचिवंतच्चकौतुकाविष्टचेतसः ॥ ५६ ॥ वदभद्रकृतेहर्म्येयत्रस्थानेव्यवास्थितः ॥ किंगोत्रंकिंचते
नामकाशाखाप्रवराश्चके ॥ ५७ ॥ ततःसलज्जयायुक्तःप्रोवाचतदनंतरम् ॥ गोत्रंचममवासिष्ठंशाखामा

ध्यंदिनीस्मृता ॥ ५८ ॥ तथैकप्रवरस्तत्रनाममेशाकटायनः ॥ एतन्ममगृहंविप्राःकैलासशिखरोपमम् ॥
॥ ५९ ॥ स्थितंपश्चिमादिग्भागेदेवस्यपरमेष्ठिनः ॥ सांप्रतंब्राह्मणःकश्चिद्गृहेतस्मिन्व्यवस्थितः ॥ ६०॥
तृणबिंदुरितिख्यातःसोममन्वयसंभवः ॥ पौत्रोमेब्राह्मणश्रेष्ठवेदवेदांगपारगः ॥ ६१ ॥ तृणबिंदुपिताचा
स्यमयाजातोनसंशयः ॥ ततस्तेब्राह्मणाःसर्वेतमानीयकुतूहलम् ॥ ६२ ॥ तृणबिंदुंचप्रप्रच्छुःपितृपैता
महंपदम् ॥ तथानामचशाखांचप्रवरंविस्मयान्विताः ॥ ६३ ॥ तेनापिचतथाप्रोक्तंमंत्रिणायदुदाहृतम् ॥
तृणबिंदुश्चविज्ञायस्वैश्चिन्हैःप्रपितामहम् ॥ ६४ ॥ जानुभ्यामवनींगत्वाप्रणाममकरोत्ततः ॥ प्रोवाचवि
नयोपेतोबाष्पगद्गदयागिरा ॥ ६५ ॥ पितामहोसिचेन्मह्यंत्वंतातवदमेधुना ॥उपदेशंशुभंयेनसिद्धिस्यादा
वयोर्ध्रुवम् ॥ ६६ ॥ ॥ मंत्र्युवाच ॥ ॥ एषएवत्वयादेशोमदीयःपुत्रशोभनः ॥ अवश्यंकरणीयश्च
श्रद्दधासिवचोयदि ॥ ६७ ॥ कार्तिकीदिवसेप्राप्तेकुंडत्रयप्रदक्षिणा ॥ मौनेनचत्वयाकार्यासमंताज्ज्येष्ठ
पुष्करे ॥ ६८ ॥ ततःस्नानंगयाकूपेश्राद्धंकार्यंप्रयत्नतः ॥ येनमेस्याद्गतिर्दिव्याप्रदक्षिणकृताचमे ॥
॥ ६९ ॥ ॥ सूतउवाच ॥ ॥ एवमुक्त्वाचमंत्रीचसराजावैबृहद्रथः ॥ साचपत्नीनरेंद्रस्यदशार्णाधि
पतेःसुता ॥ ७० ॥ तान्प्रणाम्याद्विजान्सर्वान्अनुज्ञाप्यपृथक्पृथक् ॥ ततोजग्मुर्द्विजश्रेष्ठाःस्वदेशप्रति

सत्वरम् ॥ ७१ ॥ एतद्वः सर्वमाख्यातंप्रदाक्षिणसमुद्भवम् ॥ माहात्म्यंब्राह्मणश्रेष्ठाःसर्वपातकनाशनम् ॥
॥ ७२ ॥ यश्चैतच्छृणुयान्नित्यंश्रद्धापूतेनचेतसा ॥ सफलंस्नानजंलेभेत्रिपुष्करसमुद्भवम् ॥ ७३ ॥ एत
स्मात्कारणान्मौनंक्रियतेद्विजसत्तमाः ॥ त्रिपुष्करेभ्रमद्भिश्चसंप्राप्तेकार्तिकीदिने ॥ ७४ ॥ इतिश्रीपद्मपु
राणेपुष्करमाहात्म्येपंचदशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥
॥ ऋषयऊचुः ॥ ॥ त्वयासूतपुराप्रोक्तंसावित्रीनागताचयत् ॥ दीक्षाकालेततस्तेनब्रह्मणासास
माहृता ॥ १ ॥ गोपजातास्वपत्न्यर्थंयज्ञशालाश्रयाकृता ॥ किंकृतंवदसावित्र्यासपत्नीब्रह्मणोंतिके
॥ २ ॥ श्रुत्वाप्राप्तावदप्राज्ञपरंकौतूहलंहिनः ॥ ॥ सूतउवाच ॥ ॥ पुलस्त्यस्यवचःश्रुत्वासावित्री
चत्वरान्विता ॥ ३ ॥ स्नानंचक्रेततोभूषांसम्यग्वस्त्रीजनोचिताम् ॥ एतस्मिन्नंतरेप्राप्तास्वयंगौरीतिदं
तिके ॥ ४ ॥ तथालक्ष्मीचशक्राणीस्वधास्वाहाविभावरी ॥ अरुंधतीरतिःप्रीतीरंभादेवीचरोहिणी ॥
॥ ५ ॥ वसुधाराक्षमापुष्टिस्तुष्टिर्मेधासरस्वती ॥ तथान्यादेवपत्नीथावनिताकद्रुपूर्विका ॥ ६ ॥ पू
र्णपात्रधराःसर्वाःसर्वगात्रविभूषिता ॥ साताभिःसहितादेवीप्रस्थिताब्रह्मणोंतिके ॥ ७ ॥ हर्षेणमहतायु
क्तागीतवाद्यरवेणच ॥ यावत्संप्रास्थिताताववन्नारदःसमुपास्थिताः ॥८॥ मयादेवीत्वयाहूतापुलस्त्येनततः
परम् ॥ स्त्रीस्वभावंसमाश्रित्यदीक्षाकालेपिनागता ॥ ९ ॥ ततोविधिसमादेशात्शक्रेणान्याकुकन्यका ॥

साचदेवीस्वयंतत्रविष्णुनाचानुमोदिता ॥ १० ॥ संस्तुताचवृषांकेनतथान्यैःस्वर्गवासिभिः ॥ यावद्रू
पवतीकन्यातावद्रोपसुताशुभा ॥ ११ ॥ ब्राह्मणैःसकलैस्तद्वद्विवाहेसंनियोजिता ॥ किंवातेबहुनोक्तेन
पत्नीशालासमाहृता ॥ १२ मेखलायोजितातस्याःकट्यांमंत्रपुरःसरा ॥ सांप्रतंतत्रदेवेशिवृत्तांतमिदमे
वहि ॥ १३ ॥ वर्त्ततेयन्मयादृष्टंनकदाचिच्छ्रुतंशुभे ॥ एतज्ज्ञात्वाजगद्धात्रीयत्कार्यंतत्समाचर ॥ १४ ॥
अहंकोपाद्विनिष्क्रांतस्तांदृष्ट्वायज्ञमंडपे ॥ ॥ सूतउवाच ॥ ॥ तच्छ्रुत्वाचतदादेवीसावित्रीद्विजस
त्तमाः ॥ १५ ॥ प्रम्लानवदनाजातापद्मिनीवहिमागमे ॥ लतेवाच्छिन्नमूलावाचक्रीवाप्रियविच्युता ॥
॥ १६ ॥ शुचिज्येष्ठासुषादेषुसरसीवगतोदका ॥ प्रक्षीणचंद्रलेखेवमृगीवमृगवर्जिता ॥ १७ ॥ सेनेवगत
भूपालासतीविगतभर्तृका ॥ संशुष्कापुष्पमालेवमृतवत्सेवसौरभी ॥ १८ ॥ वैमनस्यंपरंजातानिश्चलत्व
मुपागता ॥ तांदृष्ट्वादेवपत्न्यस्ताजगदुर्नारदंतदा ॥ १९ ॥ धिक्धिक्कलिप्रियोदेविब्रूतेसत्यानृतंवचः ॥
॥ २० ॥ अनेनकर्मणाप्राणानबिभ्रत्येषसदामुनिः ॥ अहंत्र्यक्षेणसावित्रीपुराप्रोक्तामुहुर्मुहुः ॥ २१ ॥ ना
रदस्यमुनेर्वाक्यंनश्रद्धेयंत्वयाप्रिये ॥ यदिवांछसिसौख्यानिममजातानिपार्वति ॥ २२ ॥ नोचेत्दुःखमस
ह्यंतेभविष्यतितवात्रवै ॥ ततःप्रभृतिनैवाहंश्रद्दधेस्यवचःक्वचित् ॥ २३ ॥ तस्माद्गच्छामहेतत्रयत्रातिष्ठ

तितेपतिः ॥ स्वयंदृष्ट्वाचतेभद्रेकर्तव्यंचसमंततः ॥ २४ ॥ नैवास्यवचनादत्रस्थातव्यंत्वत्प्रगम्यताम् ॥
॥ ॥ सूतउवाच ॥ ॥ गौर्यास्तद्वचनंश्रुत्वासावित्रीहर्षवर्जिता ॥ २५ ॥ प्रास्थितामखमुद्दिश्यप्र
स्खलंतीपदेपदे ॥ गीतमाभातितत्रास्याःकर्णशूलंतथाद्विजाः ॥ २६ ॥ नृत्यंचैवतथावाद्यंमृदंगानकपूर्व
कम् ॥ प्रेतसंदर्शनंयद्वत्तत्कृत्यंसामहासती ॥ २७ ॥ वीक्षितुंनैवशक्नोतिगंतुमानातथाध्वरे ॥ शृंगारंचयथा
गारंमन्यतेसातमुत्थितम् ॥ २८ ॥ बाष्पपूर्णाक्षणादीनासावित्रीमुहुरुच्छ्वसन् ॥ ततःकृच्छ्रात्समासाद्य
शोचंतियज्ञमंडपम् ॥ २९ ॥ कृच्छ्रात्कारागृहंयद्वत्प्रेक्षंतीयज्ञमंडपम् ॥ अथदृष्ट्वाचसंप्राप्तांसावित्रींयज्ञमं
डपे ॥ ३० ॥ तत्क्षणाच्चचतुर्वक्त्रःसंस्थितोधोमुखस्तदा ॥ तथाशंभुश्चशक्रश्चवासुदेवस्तथैवच ॥ ३१ ॥
येचान्येविबुधास्तत्रसंस्थितायज्ञमंडपे ॥ तेचब्राह्मणशार्दूलास्त्यक्तयज्ञक्रियास्तथा ॥ ३२ ॥ मूकीभा
वंगताःसर्वेभयसंत्रस्तमानसाः ॥ अथसंवीक्ष्यसावित्रीसपत्न्यासहितंतदा ॥ ३३ ॥ ब्रह्माणंकोपताम्राक्षी
वाक्यमेतदुवाचसा ॥ ॥ सावित्र्युवाच ॥ ॥ किमेतद्युज्यतेकर्तुंवदवृद्धतमाकृते ॥ ३४ ॥ यद्भावा
प्तोविपत्नीत्वमेनांगोपसमुद्भवाम् ॥ पक्षयोरुभयोर्यस्याअसंख्याःपतयस्तथा ॥ ३५ ॥ शौचाचारपरित्य
क्ताधर्मकृत्यपराङ्मुखी ॥ पशूनामिवयोधर्मकृत्येस्मरसमुद्भवे ॥ ३६ ॥ एतस्यामातृकेपक्षेपैतृकेचापिसं

स्मृतः ॥ यथाहिपशवोश्नंतितृणानिजलपादपान् ॥ ३७ ॥ विण्मूत्रंकेवलंचक्रुर्भारोद्वहनमेवच ॥ तद्वद
स्याकुलंकृत्स्नमन्नमश्नातिकेवलम् ॥ ३८ ॥ तत्रपानंसमादायविण्मूत्रकरणोद्यतम् ॥ नान्यज्जानंतिक
र्तव्यंधर्मस्यैवचकाकथा ॥ ३९ ॥ अंत्यजाअपिवर्जंतिवियोनिंपद्मसंभव ॥ आभीरापशवोयद्वत्तत्किमद्य
त्वयाकृतम् ॥ ४० ॥ येनसंजायतेहास्यंआश्चर्यंचतथापरे ॥ अवश्यंयदितेकार्यंभार्ययापरयामखे ॥४१॥
तत्किन्नब्राह्मणीकाचित्प्रसूताभुवनत्रये ॥ येयंवाशौचसंत्यक्ताभुक्ताचान्यैश्चकामुकैः ॥ ४२ ॥ एषाप्राप्ता
सुपापाढ्यावेश्यायुतशताधिका ॥ अंत्यजाअपियाकन्याक्षतयोनिःप्रजायते ॥ ४३ ॥ मातृकंपैतृकंप
क्षंस्वशरीरंचपातयेत् ॥ तस्मादेतेनकृत्येनगर्हितेनधरातले ॥ ४४ ॥ नत्वंप्राप्स्यसिसत्पूजांयथान्येविबु
धोत्तमाः ॥ मुक्त्वैकंपुष्करारण्यंस्थानेष्वन्येषुयेनराः ॥ ४५ ॥ पूजांतवकरिष्यंतीतेभविष्यंतिनिर्धनाः ॥
एवमुक्त्वाविरंचिंसासावित्रीद्विजसत्तमाः ॥ ४६ ॥ ततःप्रोवाचसंक्रुद्धादृष्ट्वातंचपुरंदरम् ॥ भोभोशक्रसमा
नीतायदाभीरसमुद्भवा ॥ ४७ ॥ कन्यकाचापलंतस्यफलंभुंजस्वकर्मणा ॥ अद्यप्रभृतितेसंख्येविजयोन
भविष्यति ॥ ४८ ॥ भयेनमहतायुक्तःसदास्वर्गेवसिष्यसि ॥ तयाशक्रोदृषंप्राप्तोयुयुधेतेननिर्जितः ॥ ॥३१॥
॥ ४९ ॥ सेवयिष्यतिदीनात्माकाराहर्म्यसुयंत्रितः ॥ वासुदेवत्वयायस्माद्गोपकन्यानुमोदिता ॥ ५० ॥

विवाहार्थंसुदुर्बुद्धेर्वृद्धस्यास्यचदुर्मतेः ॥ तस्मात्वंमानुषींयोनिंसमासाद्यसुगार्हिताम् ॥ ५१ ॥ प्रियावि
योगसंयुक्तश्चिरंस्थास्यतिदुःखितः ॥ येनवेत्सिपरंदुःखंपद्मयोनेप्रजापते ॥ ५२ ॥ अन्येषामपिजंतूना
मात्मदुःखानुसेवनात् ॥ त्वयापिविष्णुनासार्धंयस्माद्भद्रानुमोदिता ॥ ५३ ॥ कुकन्येयंप्रहृष्टेनविधिच्छं
दानुवर्तिना ॥ तस्माद्दुःखेनसंयुक्तईश्वरोपिभविष्यति ॥ ५४ ॥ सुगर्हितानिवृत्तानिनित्यंभवतियत्रवै ॥
रौद्ररूपधरोनित्यंरौद्ररूपगणैर्वृतः ॥ ५५ ॥ एतेचब्राह्मणाःसर्वेममवाक्यादसंशयः ॥ दरिद्रेणसमोपेता
भविष्यंतिसदैवतु ॥ ५६ ॥ कथंचिद्दैवसंयोगेभविष्यतिधनंक्वचित् ॥ एतेषांनैवभोज्यंस्यात्तथापिवचना
न्मम ॥ ५७ ॥ गर्तांतंवामृतांवासंशतिंवाभविष्यति ॥ ५८ ॥ पाषंडेनजपंहोमंस्वाध्यायंचविशेषतः ॥
तेकरिष्यंतियज्ञांश्चयाश्चान्यासोमविक्रया ॥ ५९ ॥ एवंविप्रगणान्शप्त्वाततःप्रोवाचगांचताम् ॥ ६० ॥
यस्मान्मुखंप्रविश्यामोगायत्रीमेध्यतांगता ॥ तस्मात्तवमुखोविष्ठासपत्नीमेध्यतांगता ॥ ६१ ॥ ममवा
क्यात्तवास्यंवैविष्ठाधूमंविशिष्यते ॥ ततश्चधनदंप्राहयस्माद्दत्तंत्वयाधनं ॥ ६२ ॥ तस्माद्धनविहीनस्त्वं
भविष्यसिहिवित्तद ॥ दायादंचसमासाद्यरावणंशत्रुद्रावणम् ॥ ६३ ॥ तथान्येकिंकरायेचतवयक्षाव्यव
स्थिताः ॥ तथावायोद्विजायस्माद्यज्ञार्थंचानिमंत्रिताः ॥ ६४ ॥ तस्मादमेध्यगंधस्त्वंयथाश्रेष्ठंभविष्यसि

॥ यस्त्वंहिविप्रलौल्येनज्वालितश्चउताशनः ॥ ६५ ॥ आभीरकन्यकायत्रपत्नीशालासमाश्रिता ॥ अ
शौचाअकुलीनाचयज्ञकर्मणिगर्हिता ॥ ६६ ॥ तत्रप्राप्स्यसिमद्वाक्याद्ब्रह्मशापंसुदारुणम् ॥ येनयज्ञेन
संभूतःसर्वभक्ष्योभविष्यसि ॥ ६७ ॥ यथान्येविबुधायत्रसाहाय्यत्वेव्यवस्थिताः ॥ अपुत्रास्तेभविष्यंति
गौरीशापप्रपीडिताः ॥६८॥ ॥ सूतउवाच ॥ ॥ एवंसाविविधान्शापान्देवेभ्योद्विजसत्तमाः ॥ दत्वासर्वं
विसृज्याथदेवपत्नीसमागताः ६९॥ततश्चोदङ्मुखीभूत्वाप्रस्थितायज्ञमंडपात् ॥श्वस्वयंतीयथानारीक्षुधा
व्याकुलसंभवा॥७०॥अथतांप्रस्थितांदृष्ट्वाप्रोवाचप्रपितामहः ॥ माकोपंकुरुसावित्रिनदोषोत्रमयिस्थितः
॥७१॥यज्ञकालात्ययंमत्वामयाभीतेनपापतः॥गायत्रीयंविशालाक्षीपत्नीस्थानेनियोजिता॥७२॥त्वंज्येष्ठा
चतथाश्रेष्ठासुकुलीनाविचक्षणा॥तस्मान्मद्वाक्यमाश्रित्यपत्नीशालामलंकुरु॥७३॥एपाकर्मकरीदेवीगाय
त्रीतिभविष्यति ॥ सर्वकर्मसुकल्याणीतस्मात्कोपंपरित्यज ॥ ७४ ॥ आढ्योपायदिवानाढ्योविरूपोवा
जडान्वितः ॥ स्त्रीणांपतिःसदापूज्योयदिनस्यादकृत्यकृत् ॥ ७५ ॥ अपिविप्रियकर्तायःपरनारीसदानु
गः ॥ पतिःपूज्यतमःसोपिकुलस्त्रीणांशुचिस्मिते ॥ ७६ ॥ ॥ सावित्र्युवाच ॥ ॥ मयाकामुकगंत
व्यंयत्रनामापितेनच ॥ श्रूयतेनिश्चयोह्येषविहितोद्यदृढोह्यदि॥ ७७ ॥ एवमुक्त्वाथसादेवीसमारुह्यगिरेः ॥३२॥

शिरः ॥ स्थितातत्रदिवानक्तमुत्कृष्टेतपसिस्थिता ॥ ७८ ॥ यस्तांपश्यतिसद्भक्त्यास्नानंकृत्वाद्यपुष्करे
॥ अग्निष्टोमस्ययज्ञस्यफलंचप्राप्नुयान्नरः ॥ ७९ ॥ दक्षिणांदिशमाश्रित्ययस्तस्याश्रद्धयान्वितः ॥ सा
वित्रीमापिबेदेकांजपेल्लक्षफलंलभेत् ॥८०॥ नृत्यंगीतंचयानारीतस्यापिकुरुतेद्विजाः॥ सासौभाग्यसमोपे
ताभवेज्जन्मनिजन्मनि ॥ ८१ ॥ यादीपंयच्छतेतस्याःपुरतोघृतपूरितम् ॥ रक्तसूत्रेणसानारीविधवानै
वजायते ॥८२॥ याफलानिविचित्राणिपुरस्तस्याःप्रयच्छति ॥ नसावंध्यत्वमाप्नोतिकदाचित्द्विजसत्तमाः
॥ ८३ ॥ मिष्टान्नेनसुभक्ष्येनयास्त्रीणांसप्तकंतथा ॥ तस्यादक्षिणदिग्भागेतृप्तिंनयतिकामिनी ॥ ८४ ॥
नदुःखितादरिद्राचनवंध्यानचदुर्भगा ॥ कदाचिज्जायतेसातुयावत्कल्पशतत्रयम् ॥ ८५ ॥ यातांगंधै
स्तथाधूपैर्वस्त्रैराभरणैरपि ॥ संपूजयतिसावित्रींस्नानाद्यैर्बलिभिस्तथा ॥ ८६ ॥ नसाजन्मभवेन्नारीमु
क्त्वापार्थिवजंगृहम् ॥ तत्रापिसुतसौभाग्यसुखयुक्तासदाभवेत् ॥ ८७ ॥ अथयत्रपदंन्यस्तंसावित्र्यागि
रिरोधसि ॥ गछंत्यामेगतंस्तत्रत्रयोनस्यातिमानवः ॥ ८८ ॥ स्पर्शतेवाथवापूजांमनःसम्यक्नियोजयेत्
नकदाचिद्भवेद्दीनःसपुमान्नचदुर्भगः ॥ ८९ ॥ नारीवाब्राह्मणश्रेष्ठाभवेत्सौभाग्यकामिनी ॥ एतद्वःसर्वमा
ख्यातंवृत्तांतंद्विजसत्तमाः ॥ ९० ॥ सावित्र्याब्रह्मणासार्द्धंयज्जातंतत्रसन्मुखे ॥ यश्चैतत्पठतेभक्त्यान

रेवाशृणुयात्तथा ॥ ९१ ॥ सकृत्स्नंफलमाप्नोतिसर्वयज्ञसमुद्भवम् ॥ श्राद्धकालेविशेषेणयश्चैतत्कीर्तये
न्नरः ॥ ९२ ॥ विप्राणांपुरतोविप्रशुचिर्भूत्वासमाहितः ॥ सप्राप्नोतिफलंकृत्स्नंगयाश्राद्धेयदिष्यते ॥९३
अथवासन्निहत्यायांराहुग्रस्तादिवाकरे ॥ पूर्णमास्याममावास्यांयश्चैतत्पठतेनरः ॥ ९४ ॥ सपापात्प्र
विमुच्येतकृत्स्नात्पक्षसमुद्भवात् ॥ सावित्र्याख्यानमन्यत्रएतत्कीर्तयतेनरः ॥ ९५ ॥ पुरतोब्राह्मणेंद्राणा
मन्येषांचमहात्मनाम् ॥ सपापान्मुच्यतेनूनमाजन्ममरणांतिकात् ॥ ९६ ॥ इतिश्रीपद्मपुराणेपुष्कर
माहात्म्येसावित्रीसूचनोनामषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥
॥ सूतउवाच ॥ ॥ गतायामपिसावित्र्यांब्रह्मालोकपितामहः ॥ उवाचब्राह्मणान्सर्वान्चिंतयापर
यायुतान् ॥ १ ॥ कुर्वंतुब्राह्मणाःकर्मतद्यस्यविहितंभवेत् ॥ यज्ञेतुमामकेव्यग्राभयंत्यक्काविदूरतः ॥ २ ॥
॥ गायत्र्युवाच ॥ ॥ भोभोब्राह्मणशार्दूलाःशप्तायद्यपिकोपतः ॥ सावित्र्याकीर्तितादोषायेयुष्माकं
प्रकोपतः ॥ ३ ॥ नकथंचिद्भविष्यंतिमुक्ताकलियुगंहिवः ॥ तथापिसर्वलोकानांपूजार्थंचभविष्यथ ॥
॥ ४ ॥ युष्मद्वाक्यक्रियाःकाचिन्नकथंचिद्भविष्यति ॥ अपिमंत्रविहीनायाःसर्वैरपिगुणैर्युताः ॥ ५ ॥ भ
विष्यंतिक्रियाव्यर्थाःसत्यमेवब्रवीमिते ॥ त्वंशक्रबंधनंप्राप्यशत्रोरपिपुनर्दिवम् ॥ ६ ॥ संप्राप्स्यसिनसं

देहःसत्यमेतन्मयोदितम् ॥ ततःपरंनतेयुद्धेभविष्यतिपराजयः ॥ ७ ॥ दैत्याद्वाराक्षसाद्वापितथान्या
दपिसंयुगे ॥ सर्वभक्षोपिवन्हेत्वंसाविञ्याशापितस्तदा ॥ ८ ॥ सर्वदेवमुखोभूत्वामेध्यतांसमवाप्स्यसि ॥
अद्यप्रभृतियत्किंचिदध्वरेहूयतेहविः ॥ ९ ॥ तत्सर्वंतववक्त्रेणदेवाःप्राप्स्यंत्यसंशयम् ॥ कुगंधमापिवायो
त्वंसमासाद्यजगत्त्रये ॥ १० ॥ सर्वजंतुशरीरेषुजीवरूपोभविष्यसि ॥ ग्राह्यंहोमविभागंतेविशेषेणमहाध्व
रे ॥ ११ ॥ मयादत्तोमहाप्राणतेननूनंभविष्यसि ॥ भक्षयित्वाचमेध्यानिधेनोत्वंशापदोषतः ॥ १२ ॥
पयश्रवसियज्ञार्थंसुमेध्यममृतोपमम् ॥ यत्किंचिद्याज्ञिकंकर्मपैतृकंचविशेषतः ॥ १३ ॥ तथातेनहित
त्सर्वंसंभविष्यत्यसंशयम् ॥ यथादेवगणाःसर्वेपूजांचास्यपृथग्विधाम् ॥ १४ ॥ सप्तस्थानेषुसर्वेषुपुष्क
रेत्रविशेषतः ॥ १५ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येगायत्रीप्रसादोनामसप्तदशोऽध्यायः ॥ १७ ॥
॥ सूतउवाच ॥ ॥ एवंतेदेवताविप्रागायत्र्याहर्षसंयुतः ॥ एवंक्रतुसमंजातःपंचरात्रंद्विजोत्तमाः ॥ १ ॥
पुष्करारण्यमासाद्यब्रह्मणोव्यक्तजन्मनः ॥ समाप्तावयज्ञस्वस्वर्णरूपोपदेपदे ॥ २ ॥ दक्षिणार्थंकृता
स्तेनब्राह्मणानांद्विजोतमाः ॥ ३ ॥ वांछितानितुचान्यानिभूषणाच्छादनानिच ॥ दीनांधकृपणानां
चतथान्येषांद्विजोत्तमाः ॥ ४ ॥ एतास्मिन्नंतरेप्राहपुलस्त्यःपद्मसंभवम् ॥ समाप्तोद्यमहायज्ञस्त्वदीयः

प्रपितामह ॥ ५ ॥ प्रायश्चित्तविनिर्मुक्तः सम्यक्संपूर्णदक्षिणः ॥ तस्मादवभृथस्नानंकर्तव्यंसांप्रतंभवे
त् ॥ ६ ॥ तत्रकर्मविशेषंचवारुणंकृत्यमस्तिच ॥ तस्मादागच्छगच्छामोज्येष्ठकुंडतटंशुभम् ॥ ७ ॥ ये
नेष्टंवारुणंतत्रक्रियतेसलिलेशुभे ॥ यथावन्हौहुताःसर्वाआहुत्योमंत्रपूर्विकाः ॥ ८ ॥ तथातोयेचहोत
व्यातवयज्ञसमाप्तये ॥ एतानियज्ञपात्राणितंत्रमंत्रैर्यथोदितैः ॥ ९ ॥ होतव्यानिसुरश्रेष्ठवरुणस्यप्रतुष्ट
ये ॥ यस्तत्रसमयेस्नानंहोमांतेभवतासह ॥ १० ॥ सभविष्यातिनीरोगःप्राप्तकामोभविष्यति ॥ अन्य
त्रसतितीर्थानिभूतलेतानिपद्मज ॥ ११ ॥ तस्मिन्कालेनसंदेहस्तस्मिंस्तोयेवसंतिच ॥ येनयुक्तंभवे
त्स्नानंसर्वेषांदेहिनाविभो ॥ १२ ॥ दीक्षितेनसमंतत्रस्नानंतोयेशुभावहे ॥ ॥ सूतउवाच ॥ ॥ त
च्छ्रुत्वाप्रस्थितोब्रह्माब्राह्मतीर्थमनुत्तमम् ॥ १३ ॥ गायत्र्यासहितोहृष्टःकृतकृत्यत्वमागतः ॥ अथसर्वे
सुराःश्रुत्वामानुषाश्चविशेषतः ॥ १४ ॥ पुलस्त्यवचनंश्रुत्वास्नानार्थसमुदाहृतम् ॥ श्रद्धयापरयायुक्ताः
स्नानार्थंतेपिसंस्थिताः ॥ १५ ॥ ब्रह्मणासहिताहृष्टाभृत्यापत्यसमन्विताः ॥ अथसंकीर्णताजाताःस
मंताज्ज्येष्ठपुष्करे ॥ १६ ॥ ऊर्ध्वबाहुभिरत्युग्रैःस्नानार्थंत्वरयान्वितैः ॥ नतत्रदृश्यतेब्रह्माऋत्विजोनै
चकर्मकृत् ॥ १७ ॥ क्रियमाणंजपोपेतंततःप्रोक्तंस्वयंभुवा ॥ आनीयतांद्रुतंशक्रसुदीर्घवंशमुत्तमम् ॥

॥ १८ ॥ तस्याग्रेकृष्णवर्णस्यमृगस्यत्वाग्नियोजय ॥ ऐरावतंसमारुह्यततास्तिष्ठममांतिकम् ॥ १९ ॥
ततश्चस्नानवेलायांक्षेपणीयंजलेत्वया ॥ येनलोकःसमस्तोयंवेत्तिकालंयथोचितम् ॥ २० ॥ कर्मांतेस्ना
नजंश्रेयोयेनप्राप्नोत्यसंशयम् ॥ दूरस्थोपिसुबालोपिसुवृद्धोपिचमानवः ॥ २१ ॥ एवमुक्तःसहस्राक्षोदेवे
नपरमेष्ठिना ॥ वाढमितिवचप्रोक्तासत्वरंप्रययौततः ॥ २२ ॥ ऐरावतंसमारुह्यधृत्वावंशंकरेशुभे ॥ मृग
चर्माग्रसंयुक्तंजलमध्येव्यवस्थितः ॥ २३ ॥ ततःप्रोचुश्चतेसर्वेब्राह्मणावेदपारगाः ॥ अन्येचविबुधाःसर्वे
तत्रस्नातासुरोत्तमाः ॥ २४ ॥ गंधर्वाःकिन्नरानागागुह्यकाश्चारणास्तथा ॥ मनुष्यामुनिमुख्याश्चास्त्रियो
बालास्तथैवच ॥ २५ ॥ एतस्मिनंतरेब्रह्माशक्रंप्रोवाचसत्वरम् ॥ कृतंस्नानंसुरैःसर्वैर्विनयावनतंस्थितम्
॥ २६ ॥ सहस्राक्षत्वयाकष्टंप्रभूतंमन्मखेकृतम् ॥ तस्माद्वरयभद्रंतेवरंयन्मनसेप्सितम् ॥ २७ ॥
॥ इंद्रउवाच ॥ ॥ वर्षेवर्षेसुरश्रेष्ठसंप्राप्तोस्मिसदामखे ॥ मृगचर्मोत्सवंकृत्वावंशाग्रेणमहीपतिः ॥ २८ ॥
नागोपरिसमाधाययथाहंसुरसत्तम ॥ परिक्षिपातितोयेवसस्यात्पापविवर्जितः ॥ २९ ॥ यःकरिष्यतिवै
स्नानमनेनमृगचर्मणा ॥ सार्द्धमात्रजलेपुण्येज्येष्ठकुंडसमुद्भवे ॥ ३० ॥ तस्यवर्षकृतंपापंनाशंयातुपिता
मह ॥ प्रसादात्तवयात्रायाःफलंशतगुणंभवेत् ॥ ३१ ॥ ॥ पितामहउवाच ॥ ॥ पंचरात्रंवि

धायात्रयात्रायांज्येष्ठपुष्करे ॥ करिष्यंतिनरायेनसहितंमृगचर्मणा ॥ ३२ ॥ प्रतिपद्दिवसेप्राप्तेतेनरानि
रतेंद्रियाः ॥ संवत्सरकृतात्पापात्मुक्तिंप्राप्स्यंत्यसंशयम् ॥ ३३ ॥ तथायात्राफलंतेषांसफलंसंभविष्य
ति ॥ सर्वोपद्रवनिर्मुक्ताःसर्वव्याधिविवर्जिताः ॥ ३४ ॥ भविष्यंतिनसंदेहस्तेनरास्त्रिदशेश्वर ॥ ३५ ॥
॥ सूतउवाच ॥ ॥ एतास्मिन्नंतरेप्राप्तेदंडकाष्ठंसमाश्रितः ॥ ततःसंप्रस्थितोभूत्वावाक्यमेतदुवाचह
॥३६॥कृच्छ्रेणविश्वसन्मोच्चैःश्लेष्मरक्तंस्रवन्मुखात्॥ यक्ष्मोवाच॥तवयज्ञमहंश्रुत्वावर्तमानंपितामह ॥३७॥
आगतःक्षुत्परिश्रांतःसमाप्तोयज्ञपद्मज ॥ त्वष्टापूर्वमहंसृष्टाकेवलंप्रपितामह ॥ ३८ ॥ नकश्चिज्जीवनोपा
यःस्वल्पोपिचानिवेदितः ॥ तत्कथंसर्वलोकेशप्राणसंधारणंमम ॥ ३९ ॥ तस्मात्कुरुदयांदेवयेनतृप्तिःप्र
जायते ॥ अस्माकंत्वत्प्रसादेननतेस्याद्दर्शनंवृथा ॥ ४० ॥ ॥ पितामहउवाच ॥ ॥ पुष्करेत्रसमा
साद्ययस्त्वांसंतर्प्यपूर्वतः ॥ पश्चाद्देवान्मनुष्यांश्चपितॄन्संतर्प्ययिष्यति ॥ ४१ ॥ तत्तस्यतर्पणंश्राद्धंसफलं
संभविष्यति ॥ अन्यथाविफलत्वंचप्रयास्यतिनसंशयः ॥ ४२ ॥ मृगचर्मोत्सवेवृत्तेयस्तेश्राद्धंप्रदास्यति॥
तस्यान्वयेपितेदोषाःकदाचिन्नभविष्यति ॥ ४३ ॥ व्याधिनापुरुषोग्रस्तस्तवोद्देशेनश्रद्धया ॥ करिष्य
तिनरःश्राद्धंनिरोगःसंभविष्यति ॥ ४४ ॥ एवंतस्यवरंदत्वासदेवःपद्मसंभवः ॥ सर्वान्विसर्जयामासदेवान्वि

प्रांस्ततःपरम्॥ ४५ ॥ स्वयंचप्रययौपश्चाद्ब्रह्मलोकंमहर्षितः॥ एवंपृष्ठःपुरातेनब्रह्मणाज्येष्ठपुष्करे ॥४६॥
तस्यतत्रसयज्ञोभूद्ब्रह्माश्चर्यमयःशुभः ॥ यःकश्चिदेतन्माहात्म्यंसम्यक्संकीर्तयिष्यति॥४७॥ यःशृणोतिच
सद्भक्त्याप्रातरुत्थायमानवः ॥ अग्निष्टोमस्ययज्ञस्यसम्यक्तस्यचयत्फलम् ॥ ४८ ॥ तत्सर्वंप्राप्यतेम
र्त्यैःसत्यमेतन्मयोदितम् ॥ सर्वपापविनिर्मुक्तोगच्छतेपद्मजालयम् ॥ ४९ ॥ इतिश्रीपद्मपुराणेपुष्करमा
हात्म्येयक्षवरप्रसादोनामअष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥
॥ ऋषयऊचुः ॥ ॥ पंचसारस्वतंप्रोक्तंयदेतज्ज्येष्ठपुष्करे ॥ तत्कथंसूतसंजातंसर्वंविस्तरतोवद ॥ १ ॥
कथंतत्रसमायातासूतपुत्रसरस्वती ॥ तस्मात्स्थानात्कदाकालेसर्वंविस्तरतोवद ॥ २ ॥ ॥ सूतउवा
च ॥ ॥ प्रश्नभारोमहानेषभवद्भिर्यउदाहृतः ॥ तमहंसंप्रवक्ष्यामिनमस्कृत्यापितामहम् ॥ ३ ॥ पुरासी
द्वाडवोवन्हिर्बृहत्कोपाद्धरातलम् ॥ सर्वमुच्छेदयामाससमर्थस्तन्महद्भुतम् ॥ ४ ॥ एतस्मिन्नंतरेदेवाःसर्वे
सेंद्रपुरोगमाः ॥ यज्ञांशरहिताजाताःशून्येजातेधरातले ॥ ५ ॥ जनाःसर्वेभयत्रस्ताजलाश्रयसमाश्रि
ताः ॥ नकश्चिद्यजतेतत्रनचधर्मक्रियांनरः ॥ ६ ॥ ब्रह्मलोकंसमासाद्यततोदैवतपुरःसरः ॥ प्रोचुस्तेप्र
णिपत्योच्चैःस्तुत्वासूक्तैःपृथग्विधैः ॥ ७ ॥ प्रोचुश्चवाडवोवान्हिरवतीर्णेधरातले ॥ दहतेसर्वलोकांश्चनक

गु०मा० ।३६॥

श्चित्परिरक्षाति ॥ ८ ॥ लोकानांचसमस्तानांयज्ञानांस्यात्परिक्षयः ॥ यज्ञभागाद्वयंसर्वेप्रयास्यामःपरिक्ष
यम् ॥ ९ ॥ अशक्ताश्चवयंसर्वेतस्मात्संरक्षणेविभो ॥ लोकानद्यभवान्मुक्तास्तस्माद्यज्ञंसमाचर ॥ १० ॥
॥ ब्रह्मोवाच ॥ ॥ गच्छंतुत्रिदशाःसर्वेरक्षयामिनसंशयः ॥ क्रुद्धोबलादहंलोकमुपायेनसुरेश्वराः ॥ ११ ॥
एवमुक्त्वाविमृज्याथदेवान्लोकपितामहः ॥ ततश्चाहूयगंगाससादरंप्राहतत्क्षणात् ॥ १२ ॥ एषसंभावजः
कोपोवान्हिरूपेणभूतलम् ॥ सर्वंदहातिलोकांश्चतंनेतुमुदधौत्वरा ॥ १३ ॥ तंमुक्त्वान्यत्रनस्थानमस्या
स्तिभुवनत्रये ॥ अतोयंमहतोरौद्रोवृद्धिंयातिजलेक्षिति ॥ १४ ॥ तत्रसंस्थास्यतेहृष्टस्तस्मादेनंसमाच
र ॥ ॥ सूतउवाच ॥ ॥ तस्यतद्वचनंश्रुत्वागंगाप्राहतथान्विता ॥ १५ ॥ विवर्णवदनाभूत्वानाहंने
तुंक्षमाविभो ॥ शोषंगच्छतिमेतोयंतत्स्पर्शात्तुक्षणाद्यतः ॥ १६ ॥ तस्मादन्यउपायस्त्वंतस्यार्थेपरिचिंत
य ॥ तच्छ्रुत्वापद्मजःसर्वाःनद्यआहूयतत्क्षणात् ॥ १७ ॥ प्रोवाचनीयतामेषवाडवोग्निर्महाजवः ॥ भव
तीभिर्महाब्धौतन्नोचेत्सर्वंग्रसिष्यति ॥ १८ ॥ अथप्रोचुश्चताःसर्वागंगयायदुदीरितम् ॥ पुरावाक्यमश
क्याचप्रनेतुंवाडवंप्राति ॥ १९ ॥ ततःस्वयंमहाहूयपरमेष्ठीसरस्वतीम् ॥ प्रोवाचपुत्रिकेवन्हिंत्वंनेतुंवाड
वंक्षमा ॥ २० ॥ स्वस्थाभवंतुसर्वेपिस्वर्लोकावाडवाद्भयात् ॥ नोचेत्सर्वंधरापृष्ठेसंप्रयास्यतिसंक्षयम् ॥

अ० १९

॥ ३६ ॥

॥ २१ ॥ ततःसर्वोपिस्वर्लोकोमयासार्द्धंनसंशयः ॥ ॥ सरस्वत्युवाच ॥ ॥ अशक्तादेवतानेतुंसुती
व्रमपिपावकम् ॥ २२ ॥ परंकस्मिंश्चिलोकेशजंबूद्वीपेत्यजाधुना ॥ प्रायशःसाधवोनूनंदूषयिष्यंतिमां
विभो ॥ २३ ॥ जलावगाहनात्स्पर्शात्तत्किमत्रकरोम्यहत् ॥ ॥ ब्रह्मोवाच ॥ ॥ वत्सेत्वमेनमादा
यपातालस्थंनयद्रुतम् ॥ २४ ॥ येननस्यात्तवस्पर्शःपातालेनसमुद्भवः ॥ अपरंयदितेपीडाजायतेस्यस
मुद्भवा ॥ २५ ॥ दाहात्मिकानयंत्याचतत्कार्यंवचनंमम ॥ मत्वात्मानंसुतीव्रेणतत्संतापेनपुत्रिके॥२६॥
भित्वाभूमितलंपश्चाद्गंतव्यंप्राङ्मुखेततः ॥ ततोविश्रामणार्थायसार्द्धंकोटित्रयंशुभे ॥ २७ ॥ सान्नि
ध्यंतेगमिष्यंतिप्राचीतेवचनान्मम ॥ विश्रांताश्चसमाश्वास्यभूयोपिचद्रुतंत्वया ॥ २८ ॥ पातालमार्गं
मासाद्यगंतव्यंसागरंप्रति ॥ अस्मिन्कृतेपराकीर्तिस्तेभविष्यतिपुत्रिके ॥ २९ ॥ श्रेयश्चमेध्यतामःया
तस्माद्द्रुततरंव्रज ॥ ॥ सूतउवाच ॥ बाढमित्येवसाप्रोक्तानमस्कृत्यपितामहम् ॥ ३० ॥ हिमवंतंसमु
द्दिश्यप्रस्थितातदनंतरम् ॥ ततःप्लक्षतरंप्राप्यतस्यकोटरतोद्विजाः ॥ ३१ ॥ अवतीर्णासरिन्मुख्याप्ला
वयंतीसमंततः ॥ मत्स्यकच्छपसंकीर्णाशिशुमारसमाकुला ॥ ३२ ॥ प्रविष्टापृथिवींहित्वापातालंतदनं
तरम् ॥ अथसातीवतापेनकुर्वंतीचानिपीडिता ॥ ३३ ॥ तत्राविश्वासमासाद्यगत्वाकिंचिद्धरातलम् ॥

पुनश्चदर्शनंजातासानदीसुरसत्तमाः ॥ ३४ ॥ ब्रह्मावर्तंसमासाद्य पुनश्चादर्शनंगता ॥ कुरुक्षेत्रेयथातद्व
त्प्राचीभूत्वाद्विजोत्तमाः ॥ ३५ ॥ ततस्तुपुष्करारण्यंसंप्राप्तासत्तमानदी ॥ पंचस्रोताद्विजश्रेष्ठाऔर्वान
लेनपीडिता ॥ ३६ ॥ कनकासुप्रभाप्राचीशुद्धानंदासरस्वती ॥ प्लावयंतीसमंतात्सायज्ञवाटंविधेस्ततः
॥ ३७ ॥ सर्वतीर्थाश्रयादेवीस्तूयमानामहर्षिभिः ॥ खर्जूरीवनमासाद्यगत्वाचैवपराङ्मुखी ॥ ३८ ॥ किं
चिद्दूरातलंयावत्पुनश्चादर्शनंगता ॥ ततश्चश्रीस्थलेजाताप्रभासेतदनंतरम् ॥ ३९ ॥ वाडवानलमादाय
प्रविशत्पर्णवातिके ॥ तस्यतापेनसंतप्ताकृच्छ्रेणमहताततः ॥ ४० ॥ और्वानलोपिसंप्राप्यसमुद्रममितो
दकम् ॥ जगामपरमंतोषंतामुवाचततःपरम् ॥ ४१ ॥ सरस्वतिप्रतुष्टोस्मिकर्मणातेनतेशुभे ॥ वरंवरयभ
द्रंतेनित्यंयन्मनसिस्थितम् ॥ ४२ ॥ सादृष्ट्वातीव्रतांतत्रऔर्वानलसमुद्भवाम् ॥ मनसाचिंतयामाससमु
द्रेशोषमेष्यति ॥ ४३ ॥ प्रतापादस्यतीव्रस्यतदेनंरक्षयाम्यहम् ॥ समुद्रस्यचतुष्टचर्थंकन्याभावंसृजा
मिच ॥ ४४ ॥ एवंसंचिंत्यरूपंसाकृत्वानारीसमुद्भवम् ॥ पुष्पमालांकरेकृत्वाप्रयातासागरंप्रति ॥ ४५ ॥
अहंसरस्वतीनामकुमारीसत्तमानदी ॥ पितामहसमादेशात्और्वमादायचागता ॥ ४६ ॥ तस्माद्वरयमां
प्राप्तांसानुरागांतवांतिके ॥ रक्षांतेचविधास्यामिवाडवानलतोद्रुतम् ॥ ४७ ॥ ॥ समुद्रउवाच ॥ ॥

नास्तिदोषोस्यतेसुभ्रूपितामहवचोयतः ॥ त्वयाममापिकर्तव्यंविशेषाल्लोकरक्षणम् ॥ ४८ ॥ पाणिग्रहं करिष्यामितवाहवरवर्णिनी ॥ परंविधत्स्वमेरक्षांरौद्रदस्माद्धुताशनात् ॥ ४९ ॥ समुद्रवचनंश्रुत्वासमा दायस्वकंकणम् ॥ और्वानलायप्रायच्छादाहचेदंचसातदा ॥ ५० ॥ अनेनकंकणेनत्वंवक्रद्वारभृतेन भो ॥ पिबतोयंसमुद्रोत्थंएषमेपरमोवरः ॥ ५१ ॥ अस्मादभ्यधिकंकिंचिद्यदित्वंपिबासिकचित् ॥ और्वानलस्यतेशापंश्रृणुदास्यामितेसदा ॥ ५२ ॥ ॥ सूतउवाच ॥ ॥ सतथेतिप्रतिज्ञायवाडवोद्विजसत्त माः ॥ तत्कंकणंसमादायवक्रदेशेनिधायच ॥ ५३ ॥ पिबत्तोयंसमुद्रोत्थंतद्वारांतरमागतम् ॥ अद्या पिब्राह्मणश्रेष्ठाःसरस्वतिमतेस्थितः ॥ ५४ ॥ समुद्रस्तुसमासाद्यपत्नींसुभ्रूंपतिव्रताम् ॥ आनंदंपरमं प्रापहर्षव्याकुललोचनः ॥ ५५ ॥ एतत्पवित्रमाख्यातंसर्वपापप्रणाशनम् ॥ यःपठेच्छृणुयाद्वापिसर्वपा पैःप्रमुच्यते ॥ ५६ ॥ माहात्म्यमेतद्वरधेनुमुक्तंपापापहंगुह्यमतीवपुंसाम् ॥ सरस्वतीपंचनदस्यपुष्करे सप्राप्नुयाद्ब्रह्मपदंपुराणम् ॥ ५७ ॥ ॥ इतिश्रीपद्मपुराणेपुष्करमाहात्म्येपंचसरस्वत्युत्पत्तिर्नामएको नविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

॥ ऋषयऊचुः ॥ ॥ कथयस्वद्विजश्रेष्ठऊर्जमासस्यकिंफलम् ॥ पुष्करस्नानमाहात्म्यंजानत्वंवक्तुमर्ह

सि ॥ १ ॥ सूतउवाच ॥ ॥ शृण्वंतुमुनयः सर्वेरहस्यंपापनाशनम् ॥ पुष्करस्यतुमाहात्म्यंऊर्जपंच
दिनानिवै ॥ २ ॥ कुरुक्षेत्रादितीर्थानिगंगाद्याःसरितस्तथा ॥ कांच्यादिसहितापूर्यआयांतिज्येष्ठपुष्करे
॥ ३ ॥ इंद्राद्यादेवताःसर्वेमरीचाद्यामरुद्गणाः ॥ नारदाद्याश्चमुनयःस्नानात्पंचनदेऽन्हदे ॥ ४ ॥ शची
रंभाघृताचीचउर्वशीचतिलोत्तमा ॥ आयांतिपद्मकेयोगेस्नानात्पंचनदेऽन्हदे ॥ ५ ॥ यज्ञार्थमासज्जाति
ब्रह्मणापुराप्रदक्षिणांकुर्वंतिपुष्करत्रये ॥ ऊर्जेवराहंसहमर्चयंतिप्रसन्नतांयातिचबिंदुमाधवः ॥ ६ ॥ ऊर्जेपं
चदिनानिचार्द्धकंचसर्वाणितीर्थानिसरस्वतीदिशैकतः ॥ स्नानंयग्रुःपंचदिनेऽन्हदेचवाराहमग्रंशरपंचकेच
॥ ७ ॥ हत्वातथाबाष्कलिदैत्यमुग्रंरूपंअजःपर्वतमस्तकेषु ॥ तीर्थेकृतंपावनमुत्तमंचदत्वाहिराज्यंनलका
हिरुद्रे ॥ ८ ॥ स्नानार्चनंकुर्वंतिनागतीर्थेसंध्यामुपास्तेवटब्रह्ममागतः ॥ भुंक्ष्वत्रियंसत्तद्वितयश्चपुण्यंपु
ण्यंलभेत्कोटिगुणंचधीमान् ॥ ९ ॥ शापान्मृगीमुक्तसरस्वतीचपापान्विमुक्तश्चप्रभंजनोनृपः ॥ ऊर्जेत
थापुष्करतीर्थमज्जनात्वरैर्विमानैःसुरलोकतांययौ ॥ १० ॥ स्नाताश्चयेपद्मकयोगपुष्करेमुक्ताकले-
र्बंधनदुष्टधीमान् ॥ क्षिप्तासगर्तेचमहांधकारेवश्यास्तुतेसूतजकल्पकोटी ॥ ११ ॥ स्नाताश्चयेपुष्करऊर्ज-
मासेदिनानिपंचकभीष्मकेनराः ॥ प्रयांतिलोकंचतुराननस्यगोबालघातीपशुब्रह्महास्यात् ॥ १२ ॥ आ-

दौमृष्टंपद्मकतीर्थंपावनंत्रैलोक्यमुख्यंकल्मषहानिकारि॥ तीर्थालयंसर्वसुरालयंचप्रसीदतांपद्मजपुष्कराधि-
पः ॥ १३ ॥ ऊर्जेदिनानिपंचभवेद्धरित्र्यांसदापुरापुष्करमंतरिक्षे॥ रहस्यमेतत्कथितंसमस्तंकथंद्विजपृ-
च्छसिमांपुनःपुनः ॥१४॥ ज्येष्ठेचगोप्रदातव्यामध्यमेभूमिरुत्तमा ॥कनिष्ठेकांचनंदेयंइत्येषादाक्षिणास्मृता
॥ १५ ॥ वाराहदेवंधरणीधरंचपुण्यंस्तवंपापहरंनृणांच ॥ नमोनमस्तेस्तुऋषीश्वराणांमहात्म्यमुक्त्वाव-
रतीर्थमज्जनात् ॥१६ ॥ लोमहर्षणपुत्रेणसाक्षात्पंचनदं ह्रदम् ॥ श्रावितंपापहंविप्राःसूतपौराणिकेनतु ॥
॥ १७ ॥एतत्पुष्करमाहात्म्यंपठितव्यंसमाहितैः ॥ कल्पकोटिसहस्राणिवसतेब्रह्मणःपुरे ॥ १८ ॥ का
र्तिकेशुक्लपक्षेतुज्येष्ठकुंडेस्नपेन्नरः ॥ दृष्ट्वादेवंवराहंचनभूयःस्तनपोभवेत् ॥१९॥पुष्करंपुष्करंतीर्थंपुष्क-
रंपुष्करंजलम्॥पुष्करंपुष्करंस्नानंसदापुष्करपुष्करम्॥२०॥इतिश्रीपद्मपुराणेपुष्करमाहात्म्येविंशोऽध्या-
यः ॥ २० ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ श्रीसीतारामचंद्रोजयाति ॥ श्रीरस्तु ॥ ॥ छ ॥

यहपुस्तक
मुंबईमैं पंडित श्रीधर शिवलाल सलेमाबादकै इन्होनै
श्री क० छापखानामैं छाप्यौ. संवत १९४७ शके १८१२
विकृतिनामसंवत्सर. मिति अश्वीन वद्य १३ शी
सन १८९०